A 
ACTIVE

B  
BUZZ BOSS

C
CADET DX

D 
DEVIL DX

E 
ELEPHANT

F 
FISH

G 
GIRAFFE

H 
HEN

I 
INSECT

J 
JOKER

K 
KIDD DX

L 
LI'L ANGEL
LAMBADA LIMBO

M 
MISSILE MISS INDIA Jr

N 
NEST

O 
ORANGE

P 
PIRANHA

Q 
QUEEN Jr

R 
ROBO COP

S 
SPARKY SALSA

T 
TERMINATOR




V W

The largest range of kids bikes

**HERO CYCLES**

THE ABC OF CYCLING

एतस्य अङ्कस्य विशेषाः सम्पुटः - १८ जनवरी - २००२ सञ्चिका - १०



भारतगौरवगाथा

४७



विलक्षणं मौनम् (वेतालकथा)

१९

यक्षपर्वतः

११



देवीभागवतम्

५१



## अन्तरङ्गम्




**SUBSCRIPTION**

**For USA and Canada**
**Single copy $2**
**Annual subscription $20**
***Remittances in favour of Chandmama India Ltd.***
**to**
**Subscription Division**
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony
Ekkatuthangal, Chennai - 600 097
E-mail : subscription@chandamama.org

**उपायनीक्रियताम्**
वायुयानेन भारतेतरदेशान् प्रति
वार्षिकं (१२ सञ्चिकाः) - रू.९००/-
भारते रू. १२०/- (बुक्पोस्ट् द्वारा)
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited'
नाम्ना प्रेषणीयम् ।



संस्थापकौ -
चक्रपाणिः नागिरेड्डी च

# अधिकारचिन्तनात् पूर्वं कर्तव्यचिन्तनम्

द्व्यधिकद्विसहस्रतमवर्षस्य (२००२) आरम्भः अस्मान् ज्ञापयति यत् पञ्चाशतः वर्षेभ्यः पूर्वम् अस्माकं देशे प्रजाप्रभुत्वपद्धत्या निर्वाचितः जवहरलालनेहरुनायकत्वयुक्तः प्रथमः सर्वकारः संस्थापितः अभवत् इति । अस्मदीयस्य संविधानस्य आरचनं यदा अभवत् ततः वर्षद्वयानन्तरम् एतत् प्रवृत्तम् । १९५०तमवर्षस्य जनवरीमासस्य २६तमे दिनाङ्के भारतं गणराज्यत्वेन घोषितं जातम् । १९५१ तमवर्षस्य अक्टोबर्मासः, १९५२ तमवर्षस्य फेब्रवरीमासः इत्येतयोः अभ्यन्तरे देशस्य प्रथमं सार्वत्रिकमहानिर्वाचनं प्रवृत्तम् ।

देशस्य सार्वभौमत्वम्, ऐक्यं च सर्वेणापि जनेन रक्षणीयम् इति वदति संविधानम् । पालकानां यथा तथैव मातृभूमेः अपि रक्षणं सर्वेषां जनानाम् आद्यं कर्तव्यम् इति स्मारयति तत् ।

संविधानं नागरिकाणां कांश्चन अधिकारान् अपि प्रतिपादयति । अभिप्राय-प्रकटनस्वातन्त्र्यम् अभिमतमतानुसरणस्वातन्त्र्यं, वृत्तिस्वातन्त्र्यम् इत्यादीनि सर्वे जनाः अर्हन्ति एव । एवम् अधिकारान् निरूपयत् संविधानं प्रजानां कानिचन कर्तव्यानि अपि विधत्ते । महात्मा गान्धिः वदति यत् अधिकारापेक्षातः पूर्वं कर्तव्यपालनविषये विशेषावधानं दातव्यम् इति ।

अस्माकं देशः इदानीं विविधकोणेभ्यः सङ्कटसम्भावनाम् अनुभवति । अतः नववर्षारम्भावसरे सर्वैः अपि जनैः प्रतिज्ञातव्यं यत् मातृभूमेः सुरक्षायाः, बलसंवर्धनस्य, ऐक्यस्य च विषये मया कार्यं करिष्यते इति ।

---

सम्पादकः : *विश्वम*

*भारतनायकस्पर्धायां भागम् ऊढ्वा प्राप्नुवन्तु अपूर्वाणि पारितोषिकाणि*

# भारतीयाः नायकाः -४

**आधुनिकभारते अपि विविधेषु क्षेत्रेषु अपूर्वतां प्रदर्शितवन्तः नायकाः सन्ति अनेके । तान् अधिकृत्य अत्रास्ति प्रश्नावली ।**

**समुचितोत्तरदातारः त्रयः पुरस्क्रियन्ते द्विचक्रिकादानेन**

1. साहित्यक्षेत्रे नोबेल्प्रशस्तिं प्राप्तवत्सु एशियाखण्डे एव यः प्रथमः, यस्य च गीतानि स्वातन्त्र्यसङ्ग्रामयोद्धॄन् बहून् प्रैरयत् सः राष्ट्रनायकः कः ?

   ..............................................

2. यदा भवन्तः पोखान्-अणुपरीक्षां स्मरन्ति तदा कस्य नाम आदौ स्मृतिपथम् आयाति ? सः 'भारतरत्न'प्रशस्तिविजेता सैन्यतन्त्रज्ञानसंशोधनक्षेत्रे अग्रगण्यः च । तस्य नाम किम् ?

   ..............................................

3. वयं प्रतिवर्षं फेब्रवरीमासस्य २८तमे नोबल्-प्रशस्तिविजेतुः कस्यचित् संस्मरणार्थं 'राष्ट्रियविज्ञानदिनम्' आचरामः । सः भौतशास्त्रक्षेत्रे १९२८ तमे तां प्रशस्तिं प्राप्तवान् । तस्य नाम किम् ?

   ..............................................

4. कः 'सितार'वाद्यवादकः इङ्ग्लेण्ड्देशस्य राज्ञ्याः हस्ततः 'नैट्हुड्'सम्माननं प्राप्तवान् इति किं जानान्ति भवन्तः ?

   ..............................................

5. यः दूरदर्शनक्रीडाप्रदर्शने भागं वहन् अति-जनप्रियः अस्ति, यश्च कोटिशः जनानां हृदयसम्राट् अस्ति, यस्य च निमित्तं कोल्कतानगरे देवालयः एव निर्मितः अस्ति, सः कः?..............................



प्रतिप्रश्नम् उत्तरं लिखन्तु । एतेषु पञ्चसु नायकेषु प्रियतमः कः किमर्थं च इति दशभिः शब्दैः लिखन्तु । **मम प्रियतमः नायकः** ..............................................

..............................................

..............................................

..............................................

भागग्रहीतुः नाम ..............................................

वयः .................... कक्ष्या ....................

सङ्केतः ..............................................

..............................................

..............................................

पिन् .................... दूरवाणी ....................

एतं पुटं पृथक्कृत्य प्रेषयन्तु अधोनिर्दिष्टसङ्केताय -

**भारतनायकस्पर्धा-५**
चन्दमामा इण्डिया लिमिटेड्,
८२, डिफेन्स् आफीसर्स् कालोनी
एक्काटुतङ्गल्, चेन्नै - ६०० ०९७
उत्तरप्रेषणाय अन्तिमदिनाङ्कः - **५ जनवरी - २००२**

***नियमाः -***

१. अधिकाष्ट-ऊनचतुर्दशवर्षीयाः एतस्यां स्पर्धायां भागं ग्रहीतुम् अर्हन्ति ।
२. विविधभाषाभिः प्रेषितानि उत्तराणि परिशील्य त्रयः श्रेष्ठाः चीयन्ते । यदि योग्योत्तरदातारः बहवः तर्हि प्रियतमनायकविषये लिखितं वाक्यम् अवलम्ब्य चयनं क्रियते ।
३. निर्णायकानां निर्णयः एव अन्तिमः ।
४. एतं विषयम् अधिकृत्य पत्रव्यवहारः कोऽपि न करणीयः ।
५. विजेतारः पत्रद्वारा सूच्यन्ते ।



# समयस्य मूल्यम्

दीक्षितः प्रसिद्धः कश्चन वैद्यः । सः चिकित्सायां विशेषसामर्थ्यवान् । तदीया बुद्धिमत्ता अपि अधिका ।

कदाचित् कमलगुप्तः नाम कश्चन वणिक् तं द्रष्टुम् आगतवान् । तं दृष्ट्वा वैद्यः - ''आगच्छतु गुप्तवर्य ! क्षणं प्रतीक्षताम्'' इति उक्त्वा औषधादिकं कपाटिकायां स्थापितवान् ।

तस्मिन् एव समये कश्चन भिक्षुकः उच्चस्वरेण अवदत् - ''भिक्षुकोऽस्मि श्रीमन् । अहं पङ्गुः अन्धोऽपि । अतः चलितुं द्रष्टुं वा न शक्नोमि । कृपया भिक्षां ददातु'' इति ।

दीक्षितः तम् अवदत् - ''किमपि न दीयते । अग्रे गच्छतु'' इति । भिक्षुकः निराशतया अग्रे गतवान् ।

कमलगुप्तः किमपि वक्तुम् उद्युक्तः । किन्तु तावता अपरः भिक्षुकः द्वारे स्थित्वा उच्चस्वरेण - ''श्रीमन् ! वृद्धोऽस्मि । किमपि कार्यं कर्तुं शरीरे शक्तिः नास्ति । किमपि ददातु कृपया, येन पुण्यं प्राप्येत'' इति अयाचत ।

दीक्षितः एतदवसरे अपि - ''किमपि न दीयते । गच्छतु रे'' इति उक्त्वा तं वृद्धभिक्षुकं प्रेषितवान् ।

कमलगुप्तः दीक्षितम् उद्दिश्य - ''मम आगमनस्य कारणं तु .... '' इति यावत् उक्तवान् तावता द्वारसमीपे महाढक्कानादः श्रुतः ।

कश्चन बलवान् पुरुषः शरीरं वर्णेन लिप्त्वा कशया शरीरं ताडयन् आसीत् तत्र । तेन सह आगता महिला महाढक्कां वादयति स्म उच्चैः ।

तौ दृष्ट्वा दीक्षितः झटिति बहिः गत्वा एकं रूप्यकं तस्यै महिलायै दत्तवान् । तौ ततः निर्गतवन्तौ ।

तदनन्तरं दीक्षितः प्रत्यागत्य स्वस्य आसन्दे उपविश्य कमलगुप्तम् अवदत् - ''गुप्तवर्य !



वदतु, केन वा उद्देशेन आगतं भवता ?'' इति ।

''मम कश्चन लघुः सन्देहः अस्ति'' इति अवदत् कमलगुप्तः ।

''सन्देहः लघुः महान् वा भवति चेदपि तस्य बाधा तु समाना एव । वदतु, कः सन्देहः भवन्तं बाधते ?'' इति अपृच्छत् दीक्षितः ।

''आदौ यौ भिक्षुकौ आगतौ तयोः कृते किमपि न दत्तं भवता । किन्तु अनन्तरकाले आगतायै महाढक्कावादिकायै रूप्यकं दत्तम् । आदौ आगतयोः एकः पङ्गुः अन्धः च आसीत्, अपरः वृद्धः आसीत् । उभौ अपि भिक्षादानाय अर्हौ आस्ताम् । अनन्तरम् आगतौ तु दृढकायौ, शारीरकश्रमकरणे समर्थौ च । तथापि तयोः कृते भवता एकं रूप्यकं दत्तम् । पात्रे अदानम् अपात्रे दानं च कृतं भवता । एतत् किम् उचितम् ? एवं किमर्थं कृतं भवता ? एषः एव मम सन्देहः'' इति अवदत् कमलगुप्तः ।

''योग्यः प्रश्नः भवतः । वस्तुतः भिक्षादानस्य एव विरोधी अहम् । मया भिक्षा न दत्ता एव । मया महाढक्कावादकयोः कृते यत् दत्तं तत् न भिक्षारूपेण, अपि तु अन्येन उद्देशेन'' इति मन्दहासपूर्वकम् अवदत् दीक्षितः ।

''भवतः उद्देशः कः आसीत् श्रीमन् ?'' इति महता कुतूहलेन दीक्षितं पृष्टवान् कमलगुप्तः ।

''अनन्तरं यौ आगतौ तौ भिक्षार्थम् अनर्हौ

इति अहम् अपि जानामि । यदि तयोः कृते मया किमपि न दीयेत तर्हि तौ कशाताडन-ढक्कावादनादिभिः निरन्तरं कोलाहलम् अकरिष्यताम् । अदानस्य निमित्तम् अवाच्य-शब्दैः मम निन्दनम् अपि अकरिष्यताम् । एतत्सर्वम् अहं न इच्छामि स्म । अतः तयोः दर्शनसमनन्तरम् एव मया धनं दत्तम् । धनं प्राप्य तौ कोलाहलं विना निर्गतौ । एतेन मया पञ्चदशनिमेषात्मकस्य समयस्य सञ्चयः कृतः । मम मनसः शान्तिः अपि रक्षिता'' इति अवदत् दीक्षितः ।

कमलगुप्तः क्षणकालं विचिन्त्य स्वकोषतः एकं रूप्यकं निष्कास्य वैद्याय यच्छन् - ''वैद्यवर्य ! मम प्रश्नस्य उत्तरस्य दानार्थं भवता पञ्चदश निमेषाः व्ययिताः । स च समयः मूल्यवान् अपि । अतः एतत् रूप्यकं स्वीकरोतु'' इति अवदत् ।

दीक्षितः तस्य रूप्यकस्य स्वीकरणं निराकुर्वन् - ''गुप्तवर्य ! भवता मम आशयः स्पष्टतया न गृहीतः । मया क्रीतः आसीत् भिक्षुकस्य समयः । भिक्षुकस्य योग्यतायाः अनुगुणं मया एकं रूप्यकं दत्तम् । किन्तु भवान् क्रेतुम् इच्छति वैद्यस्य मम समयम् । स च अमूल्यः । अतः एकरूप्यकदानेन क्रेतुं योग्यः न सः । तस्य समयस्य किं मूल्यं भवता दातव्यम् इति भवतः आगमनोद्देशस्य कथनस्य अनन्तरम् अहं निर्णेष्यामि । भवान् कस्य कार्यस्य निमित्तम् आगतः इति आदौ वदतु'' इति अवदत् ।

तदा कमलगुप्तः शिरः हस्तेन स्पृशन् चिन्तनम् आरब्धवान् । वस्तुतः केन उद्देशेन अत्र आगतम् इति सर्वथा विस्मृतम् आसीत् तेन ।

तस्य स्थितिं दृष्ट्वा हसन् दीक्षितः अपृच्छत् - ''भवान् आगतः अस्ति विस्मरण-शीलतायाः निमित्तम् औषधं किम् इति प्रष्टुम् । एवं ननु ?'' इति ।

''आम् आम् । तदर्थम् एव आगतं मया । एषु दिनेषु महती विस्मरणशीलता मम । किमपि स्मृतिपथे न तिष्ठति एव'' इति अवदत् कमलगुप्तः ।

''एतदर्थं दीर्घकालिकचिकित्सा एव करणीया भविष्यति । व्ययः अपि महान् स्यात् एव'' इति हसन् उक्तवान् दीक्षितः ।



ORISSA
*The soul of India*

अत्रास्ति प्रश्नावली !!

# कटकः

सहस्राधिकवर्षेभ्यः पूर्वं निर्मिते नगरे सञ्चारः कस्य वा मोदाय न भवेत् ? ओरिस्साराज्यस्य कटकनगरं स्वस्य सहस्रतमं वर्षं दृष्टवत् अस्ति । एतत् नगरं सदा प्रवासिनां, वणिजां, लघु-प्रवासेच्छुकानां, परिसरप्रियाणां च सन्तोषस्य जनने नितरां समर्थम् अस्ति ।

पर्वतप्रस्थभूमिः, वलयः इत्यादयः 'कटक'-पदस्य अर्थाः । उत्कलराजधानी इत्यपि अर्थः अस्ति तस्य । किन्तु इदानीं राजधानीत्वं एतस्य नगरस्य नास्ति चेदपि ओरिस्साराज्ये एतस्य प्रामुख्यं तु न अपगतम् । बहवः राजवंशीयाः एतत् नगरं केन्द्रीकृत्य राज्यशासनं कृतवन्तः । गङ्गवंशीयैः निर्मापितस्य बारामतीदुर्गस्यावशेषाः इतिहासकारान् पुरातत्त्वावेतॄन् च आकर्षन्ति ।

दैवभक्तानां तृप्तिजनकानि स्थानानि अत्र सन्ति बहूनि । विविधदेवानां मन्दिराणि विराजन्ते अत्र । 'क्रादुम्-ऐ-सुल्'नामकं स्थानं तु हिन्दुभिः मुस्लिमैः चापि पवित्रतमत्वेन भाव्यते । देवदूतस्य मोहम्मदस्य पादचिह्नेन युक्ता शिला अत्र अस्ति इति जनैः भाव्यते ।

परिसरप्रियाणां चित्तम् आकर्षति 'अनसुपा'-सरोवरम् । अत्र शैत्यकाले विविधदेशेभ्यः अपूर्वाः पक्षिणः आयान्ति स्वसन्तानवृद्ध्यर्थम् ।

पर्वतारोहणप्रियान् साहसयात्राप्रियान् च आनन्दयति अशोकझार् । महानद्याः मध्ये स्थितः धवलेश्वरद्वीपः दिनं यावत् विहारार्थं समुचितं स्थलम् ।

कटकनगरे हस्तकौशलनिर्मितवस्तूनि, रमणीय-शिल्पचित्रयुक्तानि ताम्रकांस्यादिपात्राणि, कौशेय-कार्पासवस्त्राणि इत्यादीनि निर्मीयन्ते ।

## प्रश्नोत्तरस्पर्धा भवदर्थम् !

**ऊनचतुर्दशवर्षीयाः अत्र भागं वोढुम् अर्हाः !!**

**प्रश्नावली – 5**

१. पुरीनगरस्य रघुराजपुरे विशिष्टं चित्रनिर्माणं प्रचलति । सः चित्रनिर्माणक्रमः कः ?

..................................................

२. 'स्टील्'निर्माणं विशेषतः ओरिस्साराज्यस्य कस्मिन् नगरे प्रचलति ?

..................................................

३. ओरिस्साराज्ये कुत्र उषाकोटि-वन्यपशुधाम अस्ति ?

..................................................

भवताम् उत्तराणि रिक्ते स्थले लिखित्वा नाम-सङ्केतादिभिः अधस्तनं विवरणपत्रं प्रपूर्य अधोनिर्दिष्ट-सङ्केताय प्रेषयन्तु –

**Orissa Tourism Quiz Contest**
**Chandamama India Limited**
**No.82, Defence Officers Colony**
**Ekkatuthangal, Chennai - 600 097**

नाम – ..................................

वयः – ..................................

सङ्केतः – ..................................

..................................

Pin : .............. Phone ..................



Winners picked by Orissa Tourism in each contest will be eligible for **3 days, 2-night** stay at any of the **OTDC Panthanivas**, upto a maximum of four members of a family. Only original forms will be entertained. The competition is not open to CIL and Orissa Tourism family members. Orissa Tourism, Paryatan Bhaven, Bhubaneswar-751 014. Ph: (0674)432177, Fax:(0674)430887, e-mail:ortour@sancharnet.in. Website:Orissa-tourism.com




# यक्षपर्वतः

## ११

*(अरण्यदुर्गे वीरपुरीयसैनिकाः स्वर्णाचार्यं पराजितवन्तः । तदा स्वर्णाचार्यः अनुचरैः सह अरण्ये पलायितवान् । तत्र तेन खड्गवर्मा, जीवदत्तः, समरबाहुः च दृष्टाः । भल्लूकगुरुः स्वशिष्याणां गुरुभक्तिं प्रमाणीकर्तुम् इच्छन् कञ्चित् आज्ञापितवान् यत् वृक्षाग्रात् उत्पततु इति । तत्समनन्तरम् एव कश्चन भल्लूकचर्मधारी भटः वृक्षम् आरुह्य उन्नतशाखातः उत्पतितवान् । तदनन्तरम् ......)*

वृक्षात् उत्पतनाय उद्युक्तं भल्लूकचर्मधारिणं भटं दृष्ट्वा जीवदत्तः धावन् गत्वा स्वस्य मान्त्रिकदण्डम् अग्रे प्रसारितवान् । भल्लूकचर्मधारी गुरोः स्मरणं कुर्वन् वेगेन तस्य दण्डस्य उपरि पतितवान् । तस्य कोऽपि व्रणः यथा न भवेत् तथा तं गृहीत्वा भूमौ स्थापितवान् जीवदत्तः ।

गुरुभक्तिप्रदर्शनार्थं प्राप्तः अवकाशः नष्टः इत्यतः नितरां खिन्नः अभवत् भल्लूकचर्मधारी भटः ।

सः खेदमिश्रितस्वरेण अवदत् – ''श्रीमन् ! भवान् मां रक्षितवान् । किन्तु स्वर्गप्राप्त्यर्थं स्थितम् अवकाशं नाशितवान्'' इति ।

तत् श्रुत्वा जीवदत्तः हसन् उक्तवान् – ''मरणानन्तरं स्वर्गः प्राप्यते उत नरकम् इति तु न ज्ञायते । प्राणापायस्तु निवारितः अभवत् एतावता । भवता भवद्गुरुणा च समरबाहोः साहाय्यं करणीयम् अस्ति । प्राणत्यागार्थं नायं समयः'' इति ।

तावता भल्लूकगुरुः समरबाहुः खड्गवर्मा च तत्र आगतवन्तः । भल्लूकगुरुः नितरां सन्तुष्टः आसीत् । सः जीवदत्तं खड्गवर्माणं च अवदत् –''अयि भोः, मम शिष्याणां गुरुभक्तिः कियती इति भवद्भ्यां प्रत्यक्षं दृष्टं



खलु ?'' इति ।

''भवच्छिष्याणां गुरुभक्तिः सुदृढा इति अङ्गीक्रियते मया । एतस्मै एतत्सहकारिणे अन्यस्मै च मया एकं कार्यं दीयते । तत् यशस्वितया करणीयं ताभ्याम्'' इति उक्तवान् जीवदत्तः ।

भल्लूकगुरुः अपरं शिष्यं स्वसमीपम् आहूतवान् । तौ उक्तवान् जीवदत्तः - ''वीरपुरीयाः सैनिकाः अनतिदूरे एव कुत्रापि स्युः । आकस्मिकतया इव भवद्भ्यां तेषां समीपं गन्तव्यम् । समरबाहु प्रभृतयः भवतोः गुरोः बिलदुर्गे सन्ति इति भावः तेषु उत्पादनीयः । एतत् कर्तुं शक्नुतः खलु भवन्तौ ?'' इति ।

''एतत् राज्ञः यथा तथैव अस्माकं गुरोः अपि कार्यम् । अतः श्रद्धया एतत् करिष्यावः । यशस्विनौ च भविष्यावः'' इति उक्तवन्तौ तौ भल्लूकचर्मधारिणौ ।

तदनन्तरं तौ ततः निर्गतौ । बहुकालं यावत् अरण्ये अटितं ताभ्याम् । सूर्यास्तसमयः यदा आसन्नः तदा कस्यचित् वृक्षस्य अधः केचन अश्वारोहिणः दृष्टाः ।

तान् दृष्ट्वा भल्लूकचर्मधारिणौ अपरस्यां दिशि मुखं कृत्वा उच्चस्वरेण उक्तवन्तौ - ''गुरुवर्य ! कुत्रास्ति भवान् ? वयम् अत्र स्मः'' इति । एवं पञ्चषवारं ताभ्याम् उच्चस्वरेण उक्तम् ।

तयोः कोलाहलं श्रुत्वा वीरपुरीयसैनिकाः आश्चर्यचकिताः । तेषां गणस्य नायकः झटिति कोषात् खड्गम् आकृष्य अनुचरान् उद्दिश्य -''एतौ कोलाहलकर्तारौ कौ स्याताम् ? भल्लूकचर्म वेषत्वेन धृतम् अस्ति एताभ्याम् । प्रायः एतौ अस्माकम् अपायं कर्तुम् अपि अर्हन्ति । एतौ बध्नीयाम तावत्'' इति उक्त्वा भल्लूकचर्मधारिणोः दिशि वेगेन गतवान् ।

तान् दृष्ट्वा भल्लूकचर्मधारिणौ भीतिं प्रदर्शयन्तौ शूलं भूमौ स्थापयित्वा करौ उन्नीय -''मान्याः, क्षन्तव्यौ आवाम् । आवां पराजयम् अङ्गीकुर्वः । अस्माकं गुरुः शत्रुभिः गृहीतः इति भाति । एवं स्थिते किम् आवयोः जीवनेन ?'' इति उक्तवन्तौ ।

तदा आश्चर्यं प्रकटयन् दलनायकः पृष्टवान् - ''भवतोः गुरुः शत्रुभिः गृहीतः किम् ? ते शत्रवः के ?'' इति ।

तदा कश्चन भल्लूकचर्मधारी उक्तवान् - ''महाशय ! अद्य प्रातः केचन उष्ट्रवाहनाः

अकस्मात् अस्माकं बिलदुर्गं प्रविष्टवन्तः । तत्समये वयं सर्वे देवीपूजायां मग्नाः आस्म इत्यतः तान् प्रतिरोद्धुं न शक्तवन्तः । ते अस्मासु बहून् मारितवन्तः । अस्माकं गुरुः, केचन वयं शिष्याः च कथञ्चित् आत्मानं रक्षन्तः अरण्यम् आगताः'' इति ।

दलनायकः स्वस्य कांश्चन अनुचरान् उद्दिश्य – ''भवन्तः वेगेन सेनाध्यक्षसमीपं गत्वा वदन्तु यत् शत्रवः बिलदुर्गे निलीय स्थितवन्तः सन्ति इति'' इति आदिश्य भल्लूकचर्मधारिणौ उद्दिश्य – ''शत्रवः कुत्र सन्ति इति वदद्भ्यां भवद्भ्यां महान् उपकारः कृतः। सेनाध्यक्षः यदा आगमिष्यति तदा तम् उक्त्वा अहं पारितोषिकं दापयिष्यामि'' इति अवदत् ।



तदा अपरः भल्लूकचर्मधारी अनिच्छापूर्वकम् अवदत् – ''वयं तु देव्याः उपासकाः । पारितोषिकादिषु अस्माकम् आस्था नास्ति । गुरुसमीपं वयं गच्छामः इदानीम्'' इति ।

तदा दलनायकः अवदत् – ''अये, तिष्ठतु । बिलदुर्गं प्रति गमनाय मार्गः दर्शनीयः भवद्भ्याम् । अतः एतस्य वृक्षस्य अधः किञ्चित्कालं तिष्ठताम्'' इति ।

दलनायकेन प्रेषिताः सैनिकाः सेनाध्यक्षं वार्तां श्रावितवन्तः । सेनाध्यक्षः महता सन्तोषेण – ''ते राजद्रोहिणः सर्वे एकत्र एव सन्ति इति एतस्मात् सिद्धम्'' इति वदन् अश्वारोहिभिः पदातिभिः च सह दलनायकसमीपम् आगतवान् ।

दलनायकः सेनाध्यक्षं पूर्णं विवरणम् उक्तवान् । सेनाध्यक्षः आज्ञापितवान् यत् सर्वे बिलदुर्गं प्रति गच्छेयुः इति । भल्लूकचर्मधारिणौ अग्रे प्रस्थितवन्तौ । अन्ये सर्वे तौ अनुसृतवन्तः । पञ्चदशनिमेषाभ्यन्तरे सर्वे बिलदुर्गसमीपे उपस्थिताः ।

सेनाध्यक्षः अश्वात् अवतीर्य बिलदुर्गस्य द्वारे स्थित्वा उच्चस्वरेण – ''अहं वीरपुरस्य सेनाध्यक्षः महत्या सेनया सह उपस्थितः अस्मि । भवन्तः सर्वे आयुधानि भूमौ स्थापयन्तः शरणम् आगच्छेयुः । द्वित्रनिमेषाभ्यन्तरे भवन्तः शरणागतिं न अङ्गीकुर्वन्ति चेत् अहम् एव सेनया सह अन्तः आगत्य भवतः सर्वान् यमपुरीं प्रेषयिष्यामि'' इति अवदत् ।

पञ्चदश निमेषाः अतीताः चेदपि गुहातः कोऽपि बहिः न आगतः । एतस्मात् सेनाध्यक्षः नितरां कुपितः । सः अश्वारोहिणः सूचितवान्

यत् भवन्तः अश्वान् वृक्षे बद्ध्वा मत्समीपे उपस्थिताः भवन्तु इति । ते सर्वे तथैव कृतवन्तः ।

ततः ते सर्वे सम्भूय गुहां प्रविष्टवन्तः । उभौ भल्लूकचर्मधारिणौ तेषां मार्गदर्शकौ आस्ताम् ।

यदा ते सर्वे अन्तः गताः तदा चत्वारः भल्लूकचर्मधारिणः अश्वरक्षकौ उभौ भटौ झटिति आक्रम्य बद्धवन्तः । तयोः हस्तपादं रज्ज्वा बद्ध्वा मुखं वस्त्रेण प्रपूर्य तौ कण्टकमये गुल्मे क्षिप्तवन्तः ।

तावता जीवदत्तः, खड्गवर्मा, भल्लूकगुरुः, समरबाहुः च तत्र उपस्थिताः ।

जीवदत्तः भल्लूकगुरुम् अवदत् - ''वीरपुरस्य सेनाध्यक्षः सजीवं ग्रहीतव्यः अस्माभिः । सः सैन्येन सह गुहायाः अन्तः अस्ति । तस्मिन् भीतिम् उत्पादयितुं महाद्वारे शुष्ककाष्ठानि राशीकृत्य ज्वालनीयानि । धूमः अन्तः प्रसरेत् । एतत्कार्यं भवतः शिष्याः, समरबाहोः अनुचराः च कुर्युः अविलम्बेन'' इति ।

भल्लूकगुरोः आज्ञानुसारं भल्लूकचर्मधारिणः शुष्कानि काष्ठपर्णादीनि राशीकृतवन्तः । ततः तैः काष्ठपर्णादिषु अग्निः योजितः ।

जीवदत्तः गुहायाः अन्तः पश्यन् अवदत् - ''अये वीरपुरीयसेनाध्यक्ष ! भवान् ससैन्यः आयुधानि पातयित्वा निमेषत्रयाभ्यन्तरे बहिः आगच्छेत् । अन्यथा वयम् अग्निज्वालनेन भवतः सर्वान् दग्धान् करिष्यामः'' इति ।

शत्रूणाम् अन्वेषणे मग्नेन सेनाध्यक्षेण एतत् वचनं श्रुतम् । तेन गुहायाः प्रकोष्ठेषु महता अन्वेषणेनापि कोऽपि न दृष्टः। 'अहं वञ्चितः अभवम्' इति अवगतं तेन ।

किं करणीयम् इति तेन क्षणकालं यावत् चिन्तितम् । तावता धूमप्रसारः प्रवृद्धः ।



अग्नियुक्तानि काष्ठानि कानिचन तत्समीपे अपि पतितानि । महती विपत् उपस्थिता इति तेन झटिति अवगतम् । अतः सः स्वस्य हस्तस्थम् आयुधं भूमौ पातयित्वा सर्वान् सैनिकान् आदिष्टवान् यत् सर्वे आयुधानि भूमौ स्थापयेयुः इति ।

यदा सर्वैः सैनिकैः तथैव कृतं तदा सः उच्चस्वरेण अवदत् – ''अहं वीरपुरीयः सेनाध्यक्षः ससैन्यं शरणागतः अस्मि । निरायुधाः सन्तः वयं गुहातः बहिः आगच्छन्तः स्मः'' इति ।

खड्गवर्मा यावत् किमपि वक्तुम् उद्युक्तः तावता भल्लूकगुरुः अवदत् – ''आर्य ! राजा तत्पक्षीयाः च विश्वासार्हाः न भवन्ति प्रायः । अतः आदौ मच्छिष्यौ प्रेषयितुं सूचयाम । तयोः मुखात् वस्तुस्थितिं ज्ञात्वा अग्रिमं पदं निर्णयाम'' इति ।

एतत् श्रुत्वा जीवदत्तः हसन् अवदत् – ''भुजङ्गः एव अपरस्य भुजङ्गस्य गतिम् अवगन्तुं शक्नोति । अतः एतेन यथा उच्यते तथैव भवतु । आदौ भल्लूकचर्मधारिणौ बहिः प्रेषयन्तु इति सूचयाम'' इति ।

ततः भल्लूकगुरुः शूलम् उन्नीय – ''वृकेश्वरीमाता जयतात्'' इति घोषयित्वा उच्चस्वरेण अवदत् – ''शिष्यौ, आदौ भवन्तौ बहिः आगच्छताम् । अन्ये सर्वे तत्रैव भवन्तु । तिलमात्रम् अपि अग्रे न आगच्छेयुः ते । एषा अरण्यदुर्गमहाराजस्य समरबाहोः आज्ञा'' इति अघोषयत् ।

एताम् आज्ञां श्रुत्वा तौ उभौ भल्लूक-चर्मधारिणौ गुहातः बहिः आगतौ ।



गुहायाः अन्तः स्थितः सेनाध्यक्षः स्वस्य असहायकताविषये नितरां प्रक्षुब्धः आसीत् । सः भीत्या कम्पते स्म अपि ।

गुहातः बहिः आगतौ भल्लूकचर्मधारिणौ समग्रं विवरणं श्रावितवन्तौ । ततः खड्गवर्मा जीवदत्तः च सेनाध्यक्षम् आज्ञापितवन्तौ – ''ससैन्यं गुहातः बहिः आगन्तुम् अर्हति भवान्'' इति ।

बहिः आगतः सेनाध्यक्षः खड्गवर्मजीवदत्तौ नमस्कर्तुम् उद्युक्तः । तदा जीवदत्तः समरबाहुं प्रदर्शयन् अवदत् – ''एतस्य प्रदेशस्य राजा एषः । एषः चन्द्रवंशजः । भवता एषः शरणं गन्तव्यः'' इति ।

वीरपुरीयः सेनाध्यक्षः शिरः अवनमय्य समारबाहुं नमस्कृतवान् । तावता सर्वे सैनिकाः गुहातः बहिः आगताः आसन् ।



समरबाहुः स्वर्णाचार्यम् अपृच्छत् - ''महामन्त्रिवर्य ! एतेभ्यः कीदृशः दण्डः विधातव्यः ?'' इति ।

स्वर्णाचार्यः खड्गवर्मजीवदत्ताभ्यां सह क्षणकालं समालोच्य अवदत् - ''महाराज ! वीरपुरमहाराजस्य अग्रिमपदानि अवलम्ब्य निर्णेतव्यः - एतेभ्यः कीदृशः दण्डः दातव्यः इति । यावत् स च अंशः निर्णीतः न भवति तावत् एते अस्माकं कारागारे भवन्तु नाम'' इति ।

समरबाहुः अवदत् - ''युक्तं मार्गदर्शनं भवतः'' इति ।

अद्यावधि सः लुण्ठाकनायकमात्रम् आसीत् । किन्तु इदानीं तस्य वचने व्यवहारे च राजोचितलक्षणानि दृश्यन्ते स्म । एतत् दृष्ट्वा आश्चर्यम् अनुभवन् खड्गवर्मा जीवदत्तं मन्दस्वरेण अवदत् - ''एकः सामान्यः विजयः अहो, समरबाहौ महत् परिवर्तनम् अजनयत्'' इति ।

समरबाहुः खड्गवर्मजीवदत्तौ पश्यन् अवदत् - ''अस्माकं दुर्गं प्रति गच्छाम किम् ?'' इति ।

''राजाज्ञां को वा तिरस्कर्तुम् अर्हति ? अस्तु, गच्छाम तावत्'' इति हसन् उक्तवान् जीवदत्तः ।

समरबाहोः अनुचराः उष्ट्रान् अश्वान् च आरूढवन्तः । तेषां पृष्ठतः बन्धीभूताः वीरपुरसैनिकाः आगताः । सर्वेषाम् अग्रे आसन् - समरबाहुः, स्वर्णाचार्यः, खड्गवर्म-जीवदत्तौ च । तेऽपि अश्वम् आरूढवन्तः आसन् ।

अल्पे एव काले ते पर्वतदुर्गं प्राप्तवन्तः । तत्र तैः एकस्य वृक्षस्य अधः स्थितम् एकं पटगृहं दृष्टम् । तस्य पुरतः उच्चासने कश्चन वृद्धः उपविष्टः आसीत् । तं परितः केचन जनाः अपि आसन् ।

एतैः न ज्ञातं यत् एषः वृद्धः कः, कुतः अत्र आगतः इति । एतान् उपस्थितान् दृष्ट्वा सः वृद्धः एव आसनात् उत्थाय खड्गवर्म-जीवदत्तयोः समीपम् आगत्य अवदत् - ''अहं वीरपुरमहाराजस्य प्रधानमन्त्री अस्मि । अस्माकं गुप्तचरद्वारा भवतोः विषये बहुधा श्रुतम् अस्माभिः । भवन्तौ एव खलु खड्गवर्मजीवदत्तौ ?'' इति ।

''आम्'' इति वदन्तौ शिरः चालयन्तौ खड्गवर्मजीवदत्तौ तं वृद्धं नमस्कृतवन्तौ । ततः तौ अश्वस्य उपरि स्थितान् परिचाययन्तौ

अवदताम् – ''एषः पर्वतदुर्गराजः समरबाहुः । एषः तस्य महामन्त्री स्वर्णाचार्यः'' इति ।

वृद्धः मन्त्री शिरः चालयन् अवदत् – ''स्वशक्त्या ये प्रदेशाः जिताः तेषु समरबाहुराजस्य शासनं भवितुम् अर्हति । वीरपुरस्य राज्ञः प्रतिनिधीभूय प्रधानमन्त्री अहम् एतत् घोषयन् अस्मि । मया तु आगतं भवतोः मेलनार्थम् । एकान्ते भवद्भ्यां सह मया वार्तालापः करणीयः अस्ति'' इति ।

स्वस्य राजत्वाङ्गीकारं श्रुत्वा नितरां सन्तुष्टः आसीत् समरबाहुः । सः वीरपुरीयसेनाध्यक्षम् अवदत् – ''एतस्मात् एव क्षणात् भवन्तः सर्वे अस्माकम् अतिथयः । अद्य अस्माकम् आतिथ्यं स्वीकृत्य श्वः भवन्तः स्वराजधानीं गन्तुम् अर्हन्ति'' इति ।

वीरपुरीयः प्रधानमन्त्री मन्दहासपूर्वकं समरबाहुं दृष्ट्वा खड्गवर्मजीवदत्ताभ्यां सह किञ्चिद्दूरं गत्वा अवदत् – ''अयि वीरौ ! गुप्तचरद्वारा अस्माभिः भवतोः विषये बहुधा श्रुतम् आसीत् । एकस्मात् यक्षतः तु ततोऽपि अधिकतया श्रुतम्'' इति ।

''यक्षः ! सः कः ?'' इति आश्चर्येण पृष्टवन्तौ खड्गवर्मजीवदत्तौ ।

ततः जीवदत्तः खड्गवर्माणम् अवदत् – ''एषः सः एव न स्यात् खलु, यश्च पद्मपुरस्य राजकुमारीं पद्मावतीम् अपहृतवान् आसीत् ?'' इति ।

खड्गवर्मा अपि यक्षविषये ज्ञातुं परमकुतूहली आसीत् । किन्तु मन्त्री किमपि अवदन् अग्रे गच्छन् आसीत् । सः समीपस्थे एकस्मिन् पर्वतशिखरे स्थित्वा पर्वतमूले प्रवहन्तीं नदीं दर्शयन् अवदत् – ''वीरौ, नद्यां रथाकारिका काचित् नौका दृश्यते खलु ?'' इति ।

खड्गवर्मजीवदत्तौ तां नौकां दृष्टवन्तौ । सा च शिलामयरथाकारिका आसीत् । तस्याः विषये ताभ्यां पद्मपुरे श्रुतम् आसीत् । अरण्यपुरे प्रत्यक्षं दृष्टम् आसीत् अपि ।

जीवदत्तः महता उत्साहेन स्वस्य दण्डम् उन्नीय – ''अहो, बहूनां वर्षाणाम् अनन्तरम् एषः यक्षः इदानीं युद्धाय सन्नद्धः सन् उपस्थितः अस्ति । स्वशक्तिं प्रदर्शयितुम् आवाभ्याम् अपि उत्तमः अवकाशः प्राप्तः अस्ति इदानीम्'' इति वदन् नद्याः दिशि वेगेन प्रस्थितवान् । – *(अनुवर्तते)*



# कारागारम् एव प्रियम्

कदाचित् राजभवने चौर्यं कुर्वन् कश्चन चोरः गृहीतः जातः । चौर्यसमये कश्चित् सैनिकं व्रणितं कृतवान् अपि आसीत् सः । सः सैनिकः तं राजसमीपं नीत्वा प्रवृत्तं सर्वं श्रावितवान् ।

सर्वं श्रुत्वा क्रुद्धः राजा आज्ञापितवान् - ''पञ्च वर्षाणि एषः कारागारे भवतु । मुक्तिप्राप्तिदिने एषः पुनरपि मत्समीपम् आनेतव्यः'' इति ।

ततः पञ्च वर्षाणि अतीतानि । सैनिकाः तं चोरं राजसमीपम् आनीतवन्तः । चोरः नितरां कृशः जातः आसीत् । रोगग्रस्तः इव परिलक्ष्यते स्म सः । तं करुणया पश्यन् राजा अवदत् - ''अन्धकारमये कारागारे भवता प्रभूतं कष्टं निरूढम् इति भाति । अद्य तु भवान् कारागारात् विमुक्तः । महतः आनन्दस्य विषयः खलु एषः ?'' इति ।

तदा चोरः राजानं नमस्कुर्वन् उक्तवान् - ''महाराज ! अन्धकारमये कारागारे आदौ मया कष्टम् अनुभूयते स्म । किन्तु गच्छता कालेन सुखम् एव अनुभूतं मया । न तत्र उदरपूरणस्य चिन्ता, न वा कुटुम्बपोषणचिन्ता । प्रतिदिनं समये समये भोजनं भवति स्म । 'धनसम्पादनार्थम् अद्य कुत्र गन्तव्यम्' इति चिन्ता न आसीत् । शैत्यवृष्टितापादयः मां न बाधन्ते स्म । अतः कारागारे एव मम अधिकसुखम् आसीत् । अतः कारागारे एव वासार्थं कृपया मह्यम् अनुमतिः दातव्या इति मम सविनयप्रार्थना'' इति ।

एतत् श्रुत्वा राजा अवगतवान् यत् महति कष्टे स्थितोऽपि जनः अल्पे एव काले परिस्थितेः एव दासः सन् तदेव जीवनं रमणीयं भावयति इति । अतः सः उक्तवान् - ''भोः, अलं भीत्या । कारागारजीवनं यथा तथैव स्वतन्त्रं जीवनम् अपि अचिरात् एव भवतः प्रियं भविष्यति । अद्य आरभ्य भवान् अस्माकम् उद्यानपालकस्य साहाय्यं करोतु । तदेव कार्यं भवतः प्रियं भविष्यति अल्पे एव काले'' इति ।





## वेताल-कथा

# विलक्षणं मौनम्

भयङ्करी रात्रिः सा । धाराकारेण वृष्टिः पतन्ती आसीत् । निरन्तरमेघगर्जनैः वातावरणं भयं जनयत् आसीत् । यदा आकाशे विद्युत्सञ्चारः भवति स्म तदा पिशाचानां विकृतानि मुखानि दृष्टि-गोचराणि भवन्ति स्म । राजा त्रिविक्रमः कठिनं कण्टकमयं मार्गम् अतिक्रम्य वृक्षस्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् – "अये राजन् ! मां निरन्तरं वहतः भवतः किं चिन्तनम् अस्ति ? राज्ञः सुशान्तस्य यादृशं मौनं ततोऽपि विलक्षणम् अस्ति भवतः मौनम् । किं भवता सुशान्तस्य कथा



ज्ञायते ? न खलु ? तां ज्ञापयितुं, भवतः मार्गायासस्य परिहारार्थं च तां विस्तरेण श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं बेतालेन कथा आरब्धा -

पुष्पनगरस्य राजा सुशान्तः चतुरः दयालुः च । सः साधूनां विषये आदरवान्, कलाविदां प्रोत्साहकः, कवीनां पोषकः च आसीत् । प्रजाः सर्वदा सन्तुष्टाः भवेयुः इति, राज्यं समृद्धं भवेत् इति च सः सदा प्रयत्नशीलः भवति स्म । तस्य एका एव न्यूनता नाम 'कोपः' । अपेक्षानुसारं यदि कार्यं न भवति तर्हि तस्य कोपः प्रवृद्धः भवति स्म ।

एकदा राजगृहस्य पाचकाः विशेषातिथीनां निमित्तं राज्ञा सूचितं भक्ष्यं सम्यक् न कृतवन्तः । तदा ते न केवलम् उद्योगात् च्याविताः, अपि तु राज्यात् एव बहिष्कृताः ।

यदि कश्चन अधिकारी दोषी इति ज्ञायते अथवा कर्तव्यलोपं कृतवान् भवति, तर्हि तेन राज्ञः कोपः सम्मुखीकरणीयः भवति स्म एव । तादृशः उद्योगात् एव च्युतः भवति स्म । राज्ञः सुशान्तस्य कोपप्रवृत्त्या प्रजाः क्लेशम् अनुभवन्ति स्म बहुधा ।

एकदा कश्चन संन्यासी सुशान्तस्य सभां प्रविष्टवान् । सः राज्ये विद्यमानेषु केषुचित् मन्दिरेषु प्रवचनादिकं कर्तुम् इच्छति स्म ।

राजा विनयपूर्वकं - ''महात्मन्, कः भवान् ? कुतः आगतवान् ?'' इति पृष्टवान् ।

तदा सः संन्यासी अवदत् - ''अहं प्राणानन्दः । अहं गतेषु दशसु वर्षेषु हिमालये तपः आचरामि स्म । अहं सद्यः एव हिमालयात् अत्र आगतवान् अस्मि । मम गुरुणा उक्तम् अस्ति - 'स्वसमस्यानां परिहारमात्रं भवतः जीवनस्य उद्देशः न । ये भाग्यहीनाः सन्ति तादृशानां ज़नानां मार्गदर्शनम् अपि करणीयं भवता' इति । अतः अहम् अत्र आगतवान् अस्मि'' इति ।

एतत् श्रुत्वा राजा विनयपूर्वकम् उक्तवान् - ''स्वामिन्, यदि भवान् अत्र स्थित्वा मम मत्प्रजानां च मार्गदर्शनं करिष्यति तर्हि वयं कृतज्ञाः स्याम'' इति ।

तदा संन्यासी हसन् - ''राजन्, भवतः स्नेहेन, उत्तमस्वभावेन च अहं वशीकृतः अस्मि । अतः अहम् अत्र कानिचन दिनानि स्थास्यामि'' इति अवदत् ।

'राजोद्याने स्वामिने एकं कुटीरं निर्मान्तु' इति भटान् आज्ञाप्य राजा उद्यानपालकं सुमङ्गलम् आहूय - 'स्वामिनः सर्वविधम्

आनुकूल्यं भवान् चिन्तयतु' इति सूचितवान् ।

सुमङ्गलसंन्यासिनोः दृढा मैत्री उत्पन्ना । सुमङ्गलः पत्न्या, पुत्राभ्यां च सह उद्याने एकस्मिन् कुटीरे वसति स्म । प्रतिदिनं प्रातः प्रार्थनानन्तरं प्राणानन्दः घण्टाद्वयं यावत् राज्ञा सह भवति स्म । सुशान्तः स्वामिनः प्रवचनानि श्रद्धया शृण्वन् तस्य अनुसरणं कर्तुं प्रयत्नं करोति स्म । अनन्तरं प्राणानन्दः अन्यानि मन्दिराणि गत्वा तत्र सम्मिलितान् जनान् उद्बोधयति स्म । रात्रौ सुमङ्गलेन सह भोजनं स्वीकरोति स्म ।

एकदा प्राणानन्दः राज्ञा सह उद्याने उपविश्य वार्तालापं कुर्वन् आसीत् । सुमङ्गलः निकटे एव कञ्चित् गुल्मं समीकुर्वन् आसीत् । तदा स्वामिनं पीडयन्तः केचन भ्रमराः तेन अवलोकिताः । अनुक्षणं सः तत्र गत्वा भ्रमरान् निवारयितुं प्रयत्नं कृतवान् ।

किन्तु 'मध्ये आगत्य सम्भाषणे व्यत्ययम् आनीतवान्' इति कारणतः सुमङ्गलस्य व्यवहारेण राजा क्रुद्धः अभवत् । सः कोपेन अवदत् - ''आवयोः सम्भाषणे व्यत्ययम् आनयतः कियत् धाष्टर्यं भवतः ? कः भवन्तं मध्ये प्रवेष्टुम् उक्तवान् ? भ्रमरैः स्वामिनः कष्टं भवति चेत् अहं साहाय्यम् अकरिष्यं खलु ! मम दृष्टिपथात् दूरं गच्छतु । पुनः भवन्तम् अत्र द्रष्टुं न इच्छामि अहम्'' इति ।

सुमङ्गलः स्तब्धः अभवत् । किन्तु प्राणानन्दः तस्य रक्षणं कर्तुम् आगतवान् । सः राजानम् उद्दिश्य - ''तं मा निन्दतु पुत्र ! वस्तुतः पश्यामः चेत् तस्य आशयः उत्तमः एव आसीत् । कोपकरणं सुलभम् । किन्तु



कोपकाले स्वीकृताः निर्णयाः दोषपूर्णाः भवितुम् अर्हन्ति । यदा भवान् कोपं प्राप्स्यति तदा तावत्पर्यन्तं भवान् मौनं तिष्ठतु यावत् भवान् पूर्वतनस्थितिं न प्राप्स्यति । यदि भवान् कोपसमये सुमङ्गलम् उद्योगात् निष्कासयति तर्हि तादृशम् अपरं निष्कपटं समर्थं सेवकम् अन्वेष्टुं कष्टम् अनुभवेत्'' इति अवदत् ।

सुशान्तः तस्य उपदेशम् अनुसृत्य सुमङ्गलं क्षान्तवान् । प्राणानन्दस्य चातुर्यपूर्णैः वचनैः राज्ञः उपरि महान् प्रभावः जातः ।

एकदा प्राणानन्दः राजानम् उक्तवान् - ''परोपकारः एव मम जीवनस्य लक्ष्यम् । तदहं कुर्वन् अस्मि । मम कार्यं भवतः प्रजानां कृते केवलं सीमितं नास्ति । अहम् अन्यानि स्थानानि अपि गन्तुम् इच्छामि । सर्वेषां मार्गदर्शनं कर्तुम् इच्छामि'' इति ।



किन्तु प्राणानन्दस्य गमनं सुशान्तः न इष्टवान् । तदा प्राणानन्दः राजानं सान्त्वयन् - 'मासत्रये एकवारम् अहं पुष्पनगरम् आगमिष्यामि । मासं यावत् अत्रैव स्थास्यामि' इति उक्तवान् । राज्ञा एतत् अङ्गीकृतम् ।

मासत्रयम् अतीतम् । एकदा सायङ्काले प्राणानन्दः पुष्पनगरं प्रति आगत्य स्वकुटीरं प्रति गतवान् । प्राणानन्दस्य आगमनं सुमङ्गलः न जानाति स्म । अन्धकारः जातः आसीत् । प्राणानन्दस्य पिपासा अभवत् । जलपात्रे जलं पूरयितुं सः सरोवरस्य समीपं गतवान् । यदा सः जलपात्रं जले निमज्जितवान् तदा जलपूरणस्य शब्दः श्रुतः ।

सुमङ्गलस्य कुटीरं समीपे एव आसीत् इत्यतः सः जलपूरणशब्दं श्रुतवान् । सः चिन्तितवान् यत् केचन प्राणिनः उद्यानं प्रविष्टवन्तः सन्ति इति । अनुक्षणं सः धावन् स्वस्य शूलं सरोवरस्य दिशि प्रक्षिप्तवान् ।

अहो दुर्विधिः ! शूलं स्वामिनः शरीरे संलग्नम् अभवत् । अनुक्षणं प्राणानन्दस्य क्रन्दनं श्रुतम् । प्राणानन्दस्य ध्वनिम् अभिज्ञाय भयेन तस्यां दिशि धावितवान् सुमङ्गलः । प्राणानन्दः श्वासोच्छ्वासार्थम् अपि कष्टम् अनुभवन् आसीत् । स्वामिनः पादौ गृहीत्वा सुमङ्गलः क्षमायाचनां कृतवान् । प्राणानन्दः - ''मम पृष्ठभागे संलग्नं शूलम् उत्पाटयतु । तेन अहं सुखेन मरणं प्राप्तुं शक्नोमि'' इति कष्टेन अवदत् । सुमङ्गलः मन्दं शूलम् उत्पाट्य स्वामिनम् अधः शायितवान् ।

सुमङ्गलः रुदन् - ''क्षम्यतु माम् । एवं करणस्य मम सर्वथा उद्देशः न आसीत्'' इति अवदत् ।

स्वामी हसन् - ''अहं जानामि । अहं भवन्तं क्षान्तवान् अस्मि'' इति उक्त्वा प्राणान् अत्यजत् ।

अनुक्षणं सुमङ्गलः भीत्या कम्पितः अभवत् । 'यदि राजा एतं विषयं शृणोति तर्हि मम का गतिः स्यात् ? मया मम कुटुम्बेन च कष्टं सोढव्यं भवेत्' इति सः चिन्तां प्राप्तवान् । झटिति सः कुटीरं गत्वा प्रवृत्तं सर्वं पत्नीम् उक्तवान् । रात्रौ एव ते ततः निर्गतवन्तः ।

परेद्यवि रक्षकाः उद्याने प्राणानन्दस्य शरीरं दृष्टवन्तः । ते सुमङ्गलम् अन्विष्टवन्तः । किन्तु सुमङ्गलः कुत्रापि न दृष्टः । केनापि कारणेन सुमङ्गलः एव स्वामिनं मारितवान् स्यात् इति रक्षकाः चिन्तितवन्तः । ते तां वार्तां राजानं निवेदितवन्तः । सुशान्तः कोपेन सुमङ्गलम् अन्वेष्टुं जनान् प्रेषितवान् । किन्तु सुमङ्गलः कुत्रापि न दृष्टः ।

तन्मध्ये सुमङ्गलः प्रतिवेशिराज्ये कञ्चित् उद्योगं प्राप्तवान् । किन्तु सः तृप्तः नासीत् । सः पुष्पनगरं प्रति एव गन्तुम् इच्छति स्म । एकवर्षानन्तरं कदाचित् सः पुष्पनगरं गत्वा पूर्वतनमित्रेण मिलितवान् । सः राजगृहे उद्योगी आसीत् । 'राजा प्राणानन्दस्य मरण-विषये मां क्षान्तवान् अस्ति उत न इति ज्ञात्वा आगच्छतु' इति मित्रं प्रार्थितवान् ।

सः राजोद्योगी राज्ञा सह सम्भाषणस्य अवसरं प्रतीक्षमाणः आसीत् । कदाचित् तदानीन्तनः उद्यानपालकः उद्याने नूतनान् परिष्कारान् कर्तुं राज्ञः अनुमतिं प्रार्थयन् आसीत् । तदा सः राजोद्योगी मध्ये प्रविशन्



- 'सुमङ्गलः उत्तमः उद्यानपालकः आसीत् । उद्यानार्थं सः एतावन्तं व्ययं न करोति स्म' इति अवदत् । किन्तु राजा किमपि न उक्तवान् । राजोद्योगी सुमङ्गलं 'दूरे एव तिष्ठतु' इति असूचयत् । षण्मासानन्तरं पुनश्च सुमङ्गलः मित्रं प्रार्थितवान् । पुनश्च यदा अवसरः प्राप्तः तदा सः राजोद्योगी सम्भाषणसमये सुमङ्गलस्य विषयं प्रस्तावितवान् । तदापि राजा मौनम् आश्रितवान् ।

पुनश्च षट् मासाः अतीताः । सुमङ्गलः मौनेन स्थातुं न शक्तः । सः सर्वं सम्मुखीकर्तुं सिद्धः सन् पत्नीपुत्रैः सह पुष्पनगरम् आगत्य साक्षात् राजसभां प्रविष्टवान् । राज्ञः पादयोः पतित्वा स्वामिनः आकस्मिकमरणस्य वृत्तान्तं श्रावितवान् ।

तदा राजा - ''सुमङ्गल ! अहं सर्वं जानामि । भवान् कदापि तथा कर्तुं न अर्हति

इति अहं जानामि । भवान् पुनः आगत्य उद्योगं करोतु'' इति उक्तवान् ।

वेतालः एवं कथां समाप्य राजानम् अवदत् - ''हे राजन् ! यदा सुमङ्गलस्य मित्रं प्रथमवारं सुमङ्गलस्य गुणगानं राजसभायाम् अकरोत् तदा राज्ञः कापि प्रतिक्रिया नासीत् । द्वितीयवारम् अपि तथैव । किन्तु यदा सुमङ्गलः वर्षद्वयानन्तरं स्वयं गत्वा राज्ञः पादौ गृहीतवान् तदा राजा तं क्षान्त्वा पुनश्च उद्योगे किमर्थं नियुक्तवान् ? एतेन राज्ञः व्यवहारे विलक्षणता खलु दृश्यते ? 'यदा सः सुमङ्गलं दृष्टवान् तदा एव सः निरपराधी इति ज्ञातवान्' इति भवान् भावयति किम् ? यदि भवान् एतेषां प्रश्नानाम् उत्तरं जानन् अपि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा राजा त्रिविक्रमः उत्तररूपेण - ''सुशान्तस्य व्यवहारे न किञ्चिदपि विलक्षणता अस्ति । स्वामिनः आकस्मिक-मरणस्य कारणं सुमङ्गलः न इति राजा पूर्वमेव ज्ञातवान् आसीत् । सः उत्तमः शासकः इति भवान् जानाति एव । अतः सः स्वस्य उद्यानपालकं सम्यक् एव जानीयात् । सः सुमङ्गलम् अन्वेष्टुं जनान् प्रेषितवान् । यतः स्वामिनः आकस्मिकमरणेन सः कुपितः आसीत् । कोपः एव राज्ञः दौर्बल्यम् इति वयं जानीमः । यदा कोपः भवति तदा निर्णयः न स्वीकरणीयः इति स्वामिना आदिष्टः आसीत् राजा । यदा राजोद्योगी उद्यानपालकविषयस्य प्रस्तावं कृतवान् तदा राज्ञः कोपः न अपगतः आसीत् । किन्तु सः स्वस्य मार्गदर्शकस्य वचनं स्मृतवान्, मौनम् आश्रितवान् च । यतः कोपकाले निर्णयः सम्यक् न भवेत् इति तस्य आतङ्कः आसीत् । तदा यदि सुमङ्गलस्य प्रवेशः अभविष्यत् तर्हि निश्चयेन तस्य हानिः अभविष्यत् । तस्याः घटनायाः वर्षद्वयस्य अनन्तरं सः राजसभां प्रविष्टवान् । तदा राज्ञः कोपः न्यूनः जातः आसीत् । अतः तेन यथायोग्यम् आचरितम् । राजा तस्य मार्ग-दर्शकस्य स्वामिनः वचनानि अनुसृत्य जिह्वां कोपं च नियन्त्रयन् आसीत् । तदनन्तरमेव सः सुमङ्गलेन सह वार्तालापं कृतवान्'' इति उक्तवान् ।

एवं वदता राज्ञा मौनभङ्गः कृतः आसीत् इत्यतः शवान्तर्गतः वेतालः पुनश्च अदृश्यः भूत्वा वृक्षे लम्बमानः अतिष्ठत् ।





# विघ्नेश्वरः

सत्यलोके कमलासने उपविश्य आदिनं सृष्टिकरणात् ब्रह्मा श्रान्तः आसीत् । कल्पान्तकालः यदा आसन्नः तदा निद्रा-सूचिका तन्द्रा तम् आवृणोत् । यदा यदा सः जृम्भणम् अकरोत् तदा पर्वतेषु अग्निः समुत्पन्नः । निद्राकारणतः यदा तस्य नेत्रे निमीलिते जाते तदा आकाशस्थैः प्रलय-कालीनमेघैः मुलसधारया वर्षद्भिः जगत् जलेन आप्लावितम् । अतः सर्वं जले निलीनं जातम् । सर्वासु दिक्षु अन्धकारः प्रसृतः ।

एतस्मिन् प्रलयकाले ब्रह्मा निद्रां कृत-वान् । प्रलयकालः तस्य रात्रिसमयः । नूतनकल्पस्य आरम्भकालः आसन्नः । यदा जगति प्रकाशस्य प्रसारः आरब्धः तदा सरस्वतीदेवी वीणां गृहीत्वा भूपालरागस्य आलापनं कृतवती । एतेन ब्रह्मणः निद्रा अपगता जाता । ब्रह्मा पद्मासने उपविश्य चतसृषु दिक्षु दृष्टिं प्रसारितवान् ।

अधः समग्रं जगत् जलमयं सत् कल्लोलितं दृष्टं तेन । तेषां तरङ्गाणां मध्ये एकः श्वेताकिरणपुञ्जः तेन दृष्टः । तरङ्गाणां मध्ये तरत् किञ्चन वटपत्रं, वटपत्रस्य उपरि शयानः कश्चन शिशुः, तेन शिशुना क्रियमाणः वामपादाङ्गुष्ठस्य लेहनं च तेन दृष्टम् ।

ब्रह्मा नेत्रे निमील्य ध्यानं कृतवान् । यदा सः नेत्रे उन्मीलितवान् तदा एकं विचित्रं दृश्यं तेन दृष्टम् ।

ब्रह्मा अवगतवान् यत् सः शिशुः न अन्यः, अपि तु विराट्स्वरूपि परब्रह्म एव इति । इदानीं तस्य शिशोः शिरः गजशिरसा समानं दृश्यते स्म । सः शिशुः लघ्व्या शुण्डया दक्षिणपादं गृहीत्वा मुखे स्थापयन् आसीत् ।

शिशोः मुखं प्रसन्नम् आसीत् । चन्द्रः इव कान्त्या प्रकाशते स्म तत् । तस्य चत्वारः

१. वटपत्रे बालगणपतिः



हस्ताः आसन् । ब्रह्मा आश्चर्येण तम् एव शिशुं पश्यन् आसीत् । अकस्मात् सः शिशुः अदृश्यतां गतः । तस्मिन् प्रदेशे कश्चन मृद्राशिः दृष्टिगोचरः जातः ।

गच्छता कालेन जलतः विशालः भूभागः उत्पन्नः । समुद्रः अपि निर्मितः अभवत् ।

ब्रह्मा सृष्टेः आरम्भं कृतवान् । आदौ नदीपर्वतादयः उत्पादनीयाः इति सङ्कल्प्य ब्रह्मा कमण्डलुतः जलं स्वीकृत्य भूमौ पातितवान् । ततः वृक्ष-सस्य-खनिजादीनाम् उत्पत्तिं सङ्कल्प्य जलम् अभिमन्त्र्य भूमिं सिक्तवान् । ततः सः समुद्रे मत्स्यान्, भूमौ पशुपक्षिकृमि-कीटादीन् च सृष्टवान् । एतदनन्तरं मनुष्याणां सृष्टिं कर्तुम् इच्छन् सः कमण्डलुजलं हस्तेन स्वीकृत्य भूमौ पातितवान् ।

यदा ब्रह्मा सृष्टिक्रियायां मग्नः आसीत् तदा सरस्वती वीणावादननिरता आसीत् । तदवसरे अप्रयत्नेन अपस्वरः उत्पन्नः । एतत् श्रुत्वा आश्चर्यचकिता सरस्वती अधः दृष्टवती । पत्न्याः आश्चर्यस्य कारणं किम् इति न ज्ञातं ब्रह्मणा । सोऽपि कमलासनस्थः एव अवनम्य अधः दृष्टवान् ।

तत्र पर्वताः अधोमुखाः आसन् । तेषां शिखराणि भूमौ लग्नानि आसन् । मूलभागाः सूर्यकिरणप्रसारे अवरोधं जनयन्तः वर्धमानाः दृश्यन्ते स्म । नद्यः समुद्रात् निर्गत्य ऊर्ध्वमुखं वहन्त्यः आसन् । वृक्षाः अपि अधोमुखाः आसन् । तेषां मूलानि आकाशं स्पृशन्ति स्म ।

समुद्रस्य तरङ्गाणाम् उपरि मत्स्यादि-जलचराः दृश्यन्ते स्म । केचन क्षणे क्षणे वर्धमानाः आसन् । पुनः केचन पक्षिणः इव डयन्ते स्म । पशवः विकृताकाराः दृश्यन्ते स्म । तेषु केषाञ्चित् शिरः न आसीत् । पुनः केषाञ्चित् पुच्छम् । केचन पशवः एकपादवन्तः आसन्, पुनः केचन त्रिपादवन्तः । केषाञ्चित् नेत्रकर्णादयः न आसन्, पुनः केषाञ्चित् मुखम् एव न आसीत् । केषाञ्चित् मुखं पृष्ठभागे आसीत्, पुनः केषाञ्चित् शिरसि पुच्छम् आसीत् । केषाञ्चित् पक्षिणां पक्षौ न आस्तां, पुनः केषाञ्चित् पादौ । अतः ते पक्षिणः उड्डयने असमर्थाः आसन् ।

एतत् सर्वं दृष्ट्वा भीतिं प्राप्य ब्रह्मा मानवानां दिशि दृष्टिं प्रसारितवान् ।

तत्रापि एषा एव कथा । केषाञ्चित् शिरोद्वयम् आसीत् । एकं शिरः पुरुषीयं चेत् अपरं महिलीयम् । काश्चित् महिलाः गजाकारिकाः ताडवृक्षाकारिकाः च आसन् । केषाञ्चित् एकः पादः त्रयः पादाः वा आसन् ।

केषाञ्चित् शिरः उदरभागे आसीत् । कबन्धाः इव दृश्यन्ते स्म ते । आक्रन्दनं श्रूयते स्म तेषाम् । केचन उन्मादेन नृत्यन्ति स्म । पुनः केचन विलक्षणव्यवहारं कुर्वन्ति स्म ।

कश्चन दृढकायः पुरुषः ताडवृक्षसदृशीं विकृताकारां महिलां प्रदर्शयन् आकाशस्य दिशि मुखं कृत्वा उच्चस्वरेण - ''हे ब्रह्मदेव । एतादृश्या सह अहं कथं वा मम गृहस्थजीवनं यापयितुं शक्नुयाम् ?'' इति अपृच्छत् ।

केचन विकृताकाराः मानवाः रुदन्तः ब्रह्माणं निन्दन्ति स्म - ''हे ब्रह्मदेव । भवान् तु चतुर्मुखः इति निर्दिश्यते । चत्वारि मुखानि धरन् अपि भवान् सामान्यबुद्धिमान् अपि न इति भाति । किमर्थं भवता वयम् एतादृश-रूपयुक्ताः सृष्टाः ?'' इति ।

तेषां निन्दनकोलाहलाक्रन्दनादिकं श्रुत्वा वस्तुतः अपि ब्रह्मणः चतुर्षु अपि शिरस्सु भ्रमणम् उत्पन्नम् इव । तस्य अष्टानाम् अपि नेत्राणां पुरतः अन्धकारः प्रसृतः । आश्चर्य-चकितः सः आर्तदृष्ट्या सरस्वतीं दृष्टवान् । सरस्वती अपि असहायकतां दर्शयन्ती मन्दहासं प्रकटय्य मौनम् आश्रितवती ।

ब्रह्मा किञ्चित् विचिन्त्य उच्चस्वरेण अवदत् - ''मम सृष्टेः एषा दुस्थितिः किमर्थं अभवत् ? मया तु योग्येन क्रमेण सङ्कल्प्य जगतः निर्माणम् आरब्धम् आसीत् । तथापि एवं किमर्थं जातम् ?'' इति ।

ब्रह्मणः वचनं दशसु अपि दिक्षु प्रतिध्वनितं जातम् । किङ्कर्तव्यतामूढतया सर्वत्र पश्यता ब्रह्मणा एकः प्रकाशः दृष्टः । तत्र तेन काऽपि अपूर्वा मूर्तिः दृष्टा । सा मूर्तिः गजशिरोयुक्ता



आसीत् । तस्याः चत्वारः हस्ताः आसन् । तेषु चतुर्षु हस्तेषु क्रमेण पाशः, अङ्कुशः, कलशः, परशुः च आसन् । सा मूर्तिः पूर्णचन्द्रः इव प्रकाशते स्म । तस्याः मुखकान्तिः सर्वत्र प्रसृता आसीत् ।

तस्मिन् समये सरस्वती स्ववीणया ओङ्कारनादम् उत्पादितवती । तस्याः अङ्गुलयः वीणातन्त्रीषु स्वयं चलन्ति स्म । आदौ वीणातः मालवगौलरागस्य उत्पत्तिः जाता । ततः सः एव रागः हंसध्वनिरूपेण परिवृत्तः । गजाननाकारं प्राप्तवती सा मूर्तिः वटपत्रे स्थिता सती ब्रह्माणम् अभयमुद्रया आशिषा अनुगृहीतवती । तां परितः शरत्कालीनचन्द्रकिरणाः इव काचित् अपूर्वा कान्तिः प्रसृता आसीत् ।

ब्रह्मा अप्रयत्नेन करौ योजयित्वा अवदत् - ''हे महानुभाव ! अपूर्वाकारः कः भवान् ?



भवान् कः इति बहुधा चिन्तनेन अपि मया न ज्ञातम् । कृपया स्वस्य रूपस्य परिचयकथनेन माम् अनुगृह्णातु'' इति ।

''वत्स ! ब्रह्मदेव ! सङ्कल्पेन सह विकल्पः अपि अनुविद्धः भवति सदापि । सः एव उच्यते 'विघ्नः' इति । विघ्नान् निवार्य सङ्कल्पपूर्तिं कुर्वन् अहं विघ्नेश्वरः अस्मि । विघ्नानां नेतृत्वं वहन्तं विकल्पम् अहं स्वस्य परशुना छिनद्मि । कलशेन सङ्केत्यमानं साफल्यं गमयामि सर्वाणि कार्याणि इत्यतः अहं विघ्नविनायकः अस्मि । पृथिव्यप्तेजो-वाय्वाकाशरूपाणां पञ्चभूतानां गणस्य अधिपतिः अस्मि इत्यतः अहं गणपतिः अपि अस्मि । खाद्यपदार्थान् क्षेत्रादीन् च नाशयतः विघ्नकारकान् गजान् तीक्ष्णेन अङ्कुशेन निगृह्य पाशेन बध्नामि । अतः भवान् मां विघ्नेश्वर-नाम्ना निर्देष्टुम् अर्हति'' इति गम्भीरवाण्या अवदत् विघ्नेश्वरः ।

तदा ब्रह्मा अवदत् - ''हे विघ्नेश्वर ! हे देव ! मम सृष्टिकार्ये एतादृशः विघ्नः किमर्थम् उत्पन्नः ? उत्तमसृष्टिं कर्तुं मया कः मार्गः आश्रयणीयः ? अहं किङ्कर्तव्यतामूढः अस्मि । कृपया इतिकर्तव्यतां बोधयतु'' इति ।

''विघ्नस्य परिचयः भवतः भवतु इति उद्देशेन एव एतत् सर्वं प्रवृत्तम् । वटपत्रशायि-बालगणपतिरूपेण अहं भवते दर्शनं दत्तवान् आसम् । तस्मिन् समये भवता मद्विषये न चिन्तितम् एव । मम विषये चिन्तनं नाम सम्भाव्यविघ्नस्य विषये अवधानदानरूपस्य ज्ञानस्य प्राप्तिः । अहं तस्यैव ज्ञानस्य रूपम् । आ ब्रह्मणः आसामान्यजन्तु कार्यारम्भतः पूर्वं कार्यसफलतायै अपेक्षितं ज्ञानं प्राप्नुयात् एव । गजः अग्रिमपदस्थापनात् पूर्वं भूमिं परीक्षते । प्राणिषु हस्ती महाबलवान् । एवमेव ज्ञानक्षेत्रे बुद्धिबलं श्रेष्ठम् । हस्तिनः यादृशी मेधाशक्तिः तादृशी मेधाशक्तिः प्राप्तव्या इत्येतत् सङ्केतयितुम् अहं गजाननः जातः अस्मि । यदा भवान् निद्रायां मग्नः आसीत् तदा सोमकासुरः नाम राक्षसः चतुरः अपि वेदान् अपहृत्य समुद्रतले गोपितवान् आसीत् । महाविष्णुः मत्स्यावतारं धृत्वा तं राक्षसं संहृतवान्, चतुरः वेदान् वटपत्रशायिने मह्यं दत्तवान् च । एतानि स्वीकरोतु भवान् । इतः परं निर्विघ्नतया सृष्टिकार्यं करोतु'' इति उक्त्वा विघ्नेश्वरः ब्रह्मणे वेदान् समर्पितवान् ।

वेदानां प्राप्त्या ब्रह्मा नितरां सन्तुष्टः । विघ्नेश्वरं प्रशंसन् सः उक्तवान् - ''हे विघ्नेश्वर ! इतः परं भवन्तं ध्यात्वा हृत्पूर्वकं

सम्पूज्य च एव अहं सृष्टिकार्ये प्रवृत्तः भविष्यामि । मम सृष्टिकार्यं निर्विघ्नतया यथा प्रचलेत् तथा कृपां करोतु कृपया । एतावता मया या सृष्टिः कृता सा विकृता जाता अस्ति । तस्याः प्रतिस्वीकरणमार्गम् अपि उपदिशतु'' इति ।

ततः विघ्नेश्वरस्य प्रसादेन विकृतसृष्टिः अदृश्या जाता । तदा विघ्नेश्वरः ब्रह्माणम् उक्तवान् – ''हे ब्रह्मदेव ! अहं वक्रतां खण्डशः कृत्वा नाशयामि । मम शुण्डां वक्राकारेण धरन् अहं मम एतत् सामर्थ्यं सङ्केतयामि । वक्रस्य तुण्डस्य (मुखस्य) धारणात् अहं वक्रतुण्डः अस्मि । वक्रतुण्डरूपिणं मां ध्यात्वा यः कार्यारम्भं करोति तस्य कार्ये वक्रता कदापि न भवति । भवान् अपि स्व-इच्छानुरूपं मम रूपं ध्यात्वा सृष्टिकार्यस्य आरम्भं करोतु । सृष्टिः काचित् कला । तस्यां कलायां कापि वक्रता न भवेत् । मां ध्यात्वा सृष्टिकार्यस्य आरम्भं कुर्वतः भवतः कृते एतत् जगत् एव कलानिलयः । इतः परं सर्वे जीविनः मां पूजयितुं यथा शक्नुयुः तथा आदिपूज्यविघ्नेश्वररूपेण, समस्तजगतः रक्षणं कुर्वन् सङ्कल्पसिद्धिकारकस्य सिद्धिविनायकस्य रूपेण, समस्तगणानाम् अधिपतिः सन् गणपतिरूपेण, शिवपार्वत्योः पुत्ररूपेण च अहम् अवतारं करिष्यामि'' इति । एतावत् उक्त्वा विघ्नेश्वरमूर्तिः अदृश्यतां गता ।

एतदवसरे सरस्वती हिन्दोलरागं श्रीरागं च आश्रित्य स्ववीणया मङ्गलध्वनिम् उत्पादयन्ती आकाशं पुलकितं कृतवती ।

ब्रह्मदेवः 'विघ्नेश्वराय नमः' इति उक्त्वा सृष्टिकार्यस्य आरम्भं कृतवान् । एतदवसरे सृष्टिकार्यं सुन्दरं निर्विघ्नं च आसीत् । गम्भीर-विशाल-पर्वत-पङ्क्तयः अमृततुल्यजलयुक्ताः नद्यः, सुन्दराणि वनानि, वर्णमयपाञ्चालिकाः इव स्थिताः जीविनः, शारीरकतया मानसिकतया च शक्तिशालिनः मानवाः इत्यादयः ब्रह्मणा सृष्टाः । एतत् जगत् कलानिलयः एव आसीत् तस्य । वाग्देवी सरस्वती स्ववीणातः स्वरान् उत्पादयन्ती जगते सङ्गीतशास्त्रं दत्तवती । जीविसमुदायः समस्तशुभलक्षणैः विकासं प्राप्नोत् । जटाभिः उपेतः सन् विकासं प्राप्नुवन् वटवृक्षः इव जगत् विकासं प्राप्नुवत् आसीत् ।



# वार्ताविशेषाः

## नक्षत्रोद्यानम्




अश्विनीतः आरभ्य रेवतीपर्यन्तं २७ नक्षत्राणि सन्ति इति वयं जानीमः एव । जन्म प्राप्तवतः हिन्दोः जन्मनक्षत्रं भवति एतेषु अन्यतमम् । एकैकस्य नक्षत्रस्यापि सम्बन्धी कश्चन पशुः, पक्षी, वृक्षः, पुष्पं च भवति । तमिळुनाडुराज्ये ऊतकमण्ड्-उदकमण्डलयोः मध्ये 'मेट्टुपालयम्' इत्यत्र स्थितम् एकं विद्यालयं चित्वा कोयम्बत्तूरस्थया 'वेदिक् इण्डिया सोसैटी' इत्येतया संस्थया बालाः स्वजन्म-नक्षत्रसम्बद्धम् एकं वृक्षं यथा आरोपयेयुः तथा प्रेरणा कृता । छात्रैः प्रतिज्ञातं यत् विद्यालय-त्यागपर्यन्तम् अपि तच्च सस्यं पोष्यते इति । इदानीं 'वेदिक् इण्डिया सोसैटी'संस्था चिन्तयति यत् 'नक्षत्रोद्यान'योजना समग्रे राज्ये आरम्भणीया इति ।

## जलयन्त्रे मार्जारः




'सेलवेस्टर्' इत्येतत् त्रिमासीयमार्जारस्य नाम । तस्य स्वामिनी कापेन् हागनूवर्या । कदाचित् सः मार्जारः कथमपि क्षालनयन्त्रं प्राविशत् । एतत् स्वामिन्या न लक्षितम् एव । यन्त्रचालनानन्तरं मार्जारस्य क्रन्दनं यदा श्रुतं तदा तया वस्तुस्थितिः ज्ञाता । यन्त्रस्थस्य जलस्य औष्ण्यं वर्धमानम् आसीत् । तथापि तया यन्त्रं स्थगमितुं न शक्तम् । यतः तया 'टैमर्'द्वारा उद्घाटनसमयः यन्त्राय सूचितः आसीत् । अन्ते यदा यन्त्रम् उद्घाटितं तदा मार्जारस्य शरीरं प्राणवायोः अभावतः नीलवर्णतां गतम् आसीत् । सा झटिति मार्जारं पशुचिकित्सालयं नीतवती । केषाञ्चित् दिनानाम् अनन्तरं सः मार्जारः स्वस्थः सन् गृहं प्रत्यागतः । सः मार्जारः क्षालनयन्त्रं किमर्थं प्रविष्टवान् स्यात् ? प्रायः स्यात् शरीरस्वच्छतार्थम् !!

# वृक्षेषु संवाहकयन्त्राणि

सिङ्गपूरनगरे वृक्षविषये विशेषास्था दृश्यते । प्रतिवर्षं तत्र दशाधिकाः वृक्षाः अशनिपाततः दग्धाः भवन्ति स्म । तेन द्वित्राः मृताः भवन्ति स्म, अन्ये च पीडिताः रोगग्रस्ताः च । तेषु स्थितः रोगः अन्यत्र न प्रसरेत् इत्यतः ते वृक्षाः नाश्यन्ते स्म । नगरसभीयाः तान् अशनिपाततः रक्षितुं तेषु संवाहकयन्त्रविशेषं योजितवन्तः सन्ति । तानि यन्त्राणि अशनितः आगतम् आघातं धृत्वा भूमिं प्रति प्रेषयन्ति, तेन वृक्षः अक्षतः तिष्ठति । तादृशस्य एकैकस्य यन्त्रस्य मूल्यं ३००० अमेरिकन्-डालरात्मकम् । त्रिंशत्-मीटरौन्नत्ययुतेषु शते वृक्षेषु एतावता तानि यन्त्राणि योजितानि सन्ति ।




# सेम्सन् डेलेलाह् च



एतौ 'ओल्ड्टेस्ट्मेण्ट्'नामके ग्रन्थे निर्दिष्टौ सर्वथा न । एतौ तु लास्एञ्जलीस्नगरस्य वेन्नाय्स्-उपनगरे स्थितौ शुनकौ । तस्मिन् प्रदेशे निवसन्त्या ५८ वर्षीयया बर्बराफेरेरोवर्यया एतत् नाम कृतम् । कदाचित् सा शुनकयोः विलक्षणव्यवहारं दृष्टवती । अन्धं लघुजातीयं कञ्चन शुनकम् उन्नतजातीयः अपरः शुनकः नगरे सर्वत्र आटयति स्म । मार्गक्रमणं कारयति स्म, रक्तदीपे दृष्टे तं स्थगयति स्म च । तयोः व्यवहारः फेरेरोवर्यया परिलक्षितः बहूनि दिनानि यावत् । लघुशुनकः उन्नतशुनकं विधेयतया अनुसरति स्म । यत्र स्थगनीयं भवति तत्र उन्नतशुनकः मुखेन अन्येन अङ्गेन वा लघुशुनकस्य पादे मृदुप्रहारं करोति स्म । 'एतौ पालकरहितौ' इति ज्ञातवती सा वृद्धा तौ स्वगृहं नीत्वा पोषितवती, पूर्वोक्तं नाम दत्तवती च ।

# बुद्धिमान् बीरबलः



कदाचित् अकबरस्य आस्थानं प्रचलति स्म । कश्चन आस्थानिकः अग्रे आगत्य अकबरं त्रिवारं प्रणम्य – ''एतत् नूतनं सुगन्धद्रव्यम् इसफहानतः आनीतम् । महाराजः एतस्य उत्कृष्टताविषये स्वाभिप्रायं प्रकटयितुम् अर्हति'' इति उक्त्वा महाराजस्य हस्ते सुगन्धद्रव्यकूपीं स्थापितवान् ।

महाराजः कूपीम् उद्घाट्य दृष्टवान् । तस्य मुखे मन्दहासः उत्पन्नः । सः सभासदः उद्दिश्य – ''मया मिर्-शामसुद्दीनतः कूपी स्वीकृता यत् तत् सर्वैः दृष्टम् एव । भवतु कोऽपि किं वक्तुं शक्नुयात् यत् दातुः हस्तः अधः, स्वीकर्तुः हस्तः उपरि च कदा भवति इति ?'' इति उक्त्वा किञ्चित्कालं उत्तरं प्रतीक्षितवान् ।





'मया कूपीदानसमये किमपि अपराद्धं किम् ?' इति भीत्या राजानं दृष्टवान् शामसुद्दीनः । राज्ञः मुखं गम्भीरं लक्षितं तेन । यावत् सः किमपि वक्तुम् उद्युक्तः तावता राजा तम् अपृच्छत् – ''किं भवान् उत्तरं जानाति ?'' इति ।

सभासत्सु परस्परसम्भाषण-ध्वनिः उत्पन्नः । सभायाम् एतादृशानां प्रश्नानाम् उत्पादनं महाराजस्य स्वभावः आसीत् । अद्यतनः प्रश्नः कठिनः इव अभासत । शामसुद्दीनः विना वचनं आसने उपविष्टवान् ।





अपरः सभासत् उत्थितवान् । ''महाराज ! दातुः स्वीकर्तुः वा हस्तः उपरि अधः वा भवति चेदपि फलं तु समानम् एव'' इति उक्तवान् सः । महाराजस्य मुखे हासः उत्पन्नः । सभासदः अपि हसितवन्तः ।

अकबरः सभां परीक्षादृष्ट्या सकृत् दृष्ट्वा – ''भवतु कोऽपि मम प्रश्नस्य उत्तरं न जानाति । बीरबलः क्व ?'' इति अपृच्छत् । अकबरस्य प्रियः आस्थानिकः बीरबलः कुत्र अस्ति इति सर्वे इतस्ततः दृष्टवन्तः ।





''अहम् अत्र अस्मि महाराज !'' इति वदन् सभां प्रविष्टवान् बीरबलः । सर्वेषां दृष्टिः बीरबले संलग्ना । ''बीरबल ! प्रायः भवान् एव मम सन्देहं परिहर्तुं समर्थः'' इति उक्त्वा राजा स्वस्य प्रश्नं पुनः उच्चारितवान् ।

बीरबलः सभासदः आत्मविश्वासेन पश्यन् अकबरसमीपं गतवान् । स्वस्य नस्यपात्रम् उद्घाट्य महाराजस्य पुरतः गृहीतवान् च । महाराजः ततः किञ्चित् नस्यचूर्णं स्वीकृतवान् । तदा बीरबलः हसन् उक्तवान् – ''ज्ञातं खलु ? नस्य-चूर्णस्वीकारसमये दातुः हस्तः भवति अधः, स्वीकर्तुश्च उपरि'' इति ।



भारतीयः साम्प्रदायिकः नृत्यप्रकारः

# तालप्रधानं नृत्यम्

षोडशे शतके तरुणः सुसंस्कृतः मालवराजः बाजबहादुरः युद्धे पराजयं प्राप्य विश्रान्त्यर्थं नर्मदाखाते स्थिते 'माण्डु'प्रदेशम् आगतवान् । तत्र सः सुन्दरीं रजपूतराजकुमारीं रूपवती परिणीतवान् । तस्य चिन्तनम् आसीत् यत् सुन्दर्या पत्न्या सह दीर्घकालं यावत् सुखजीवनं यापयिष्यामि इति । किन्तु तथा न जातम् । आगरास्थः राजा अकबरः रूपवत्याः परमसौन्दर्यवार्तां श्रुतवान् । अतः सः ताम् आनेतुं माण्डुदुर्गं प्रति सैन्यं प्रेषितवान् ।

ततः घोरं युद्धं प्रवृत्तम् । बाजबहादुरः पराजयं प्राप्य रणरङ्गतः पलायितवान् । राज्ञी रूपवती शत्रुसैन्यस्य अधीना भवितुं न इच्छति स्म । अतः सा आत्महत्यया प्राणत्यागं कृतवती । अतः महता प्रयत्नेन अपि मोगलसेना रूपवतीं नेतुं न शक्तवती । किन्तु तया सेनया अमूल्यं किञ्चित् नीतम् । तया स्थानीया नाट्यपरम्परा अकबरसमीपं नीता । इतिहासः ज्ञापयति यत् तया सेनया सार्धत्रिशताधिकाः (३५०) नाट्यकाराः माण्डुदुर्गात्, समीपस्थेभ्यः प्रदेशेभ्यः च मोगलराजधानीं प्रति नीताः इति ।

भारतीयः कश्चन नाट्यप्रकारः कथं मोगलास्थानं प्रति गतः इत्येतत् निरूपयति एषा घटना । एतादृश्यः बह्व्यः घटनाः प्रवृत्ताः । एतस्य कारणतः हिन्दुनाट्यप्रकारः मुस्लिम्नाट्यप्रकारः च परस्परं सम्मिलितौ जातौ । एवम् उभयोः नाट्यप्रकारयोः सम्मेलनात् तृतीयस्य 'कथक'नृत्यप्रकारस्य जन्म जातम् ।

अकबरस्य शासनकाले मोगल-रजपूतशासनयोः मध्ये आदानप्रदानादिकम् आधिक्येन प्रवर्तते स्म । एतस्य कारणतः 'इण्डो-मोगल्'कलापरम्परायाः विकासः जातः । तस्याः एव परम्परायाः कश्चन प्रकारः





'कथक्' ।

देवालयेषु यः साम्प्रदायिकनृत्यप्रकारः भवति स्म सः एव राजास्थानं प्रति यदा गतः तदा 'कथक'रूपेण परिवर्तितः जातः ।

अष्टादशे शतके कथकनृत्यप्रकारः स्वकीयम् एव क्षेत्रं सम्पाद्य विकसितः जातः । एतस्य नाट्यस्य तन्त्राणि, साहित्यम् इत्यादयः रूपिताः जाताः । अतः एतत् नाट्यम् अन्यनाट्येभ्यः पार्थक्येन स्थितिं प्राप्नोत् ।

षोडशशतकस्य आरम्भकाले कथक-नृत्यकाराः सुपिनद्धं 'चूडीदार-पैजामा'वेषं धरन्ति स्म । मोगलचित्रकारैः चित्रितेषु चित्रेषु एतादृशं वेषधारणं स्फुटतया चित्रितं दृश्यते । अनन्तरकाले नृत्यकाराः 'नूपुर'धारणम् अपि आरब्धवन्तः ।

अन्यस्य नृत्यप्रकारस्य कथयनृत्यस्य च प्रमुखः भेदः नाम – अन्ये नृत्यप्रकाराः स्वरं रागं च अवलम्बन्ते चेत् कथकनृत्यं ताल-मात्रम् अवलम्बते । कथकनृत्ये विशिष्टानि सञ्चलनानि, तालानुगुणपदनिक्षेपविधयः च भवन्ति । कथकनृत्यं कृष्णलीलाप्रभृतीः पुराणकथाः, हिन्दुस्तानीसाम्प्रदायिक-सङ्गीतप्रकारं च अवलम्बते एतत् । सारङ्गि-„वाद्यं तबलावाद्यं च उपयुज्यते अत्र ।

महाराजः बिन्दादिनूवर्यः, लखनवूनिवासी तदीयसहोदरः कलकः, तयोः शिष्यौ अचन्महाराजः लुच्चुमहाराजः इत्यादयः एतस्य नृत्यप्रकारस्य जनप्रियतासम्पादने विशेषप्रयत्नं कृतवन्तः । बिर्जुमहाराजः शम्भुमहाराजः इत्यादयः अपि एतदर्थं प्रयत्नं कृतवत्सु अन्यतमाः ।

## एते अत्र सामान्याः अंशाः

- कथकनृत्यकारः रेखाकारेण भुजौ आनीय यत् सञ्चालयति तत् उच्यते 'कसक्-मसक्' इति । कथकनृत्यकाराः उत्कूर्दनैः संज्ञाभिश्च प्रेक्षकान् मोहयन्ति । नृत्यावसरे क्वचित् ते उभौ अपि पादौ उन्नीय वायौ एव किञ्चित्कालं तिष्ठन्ति । कथकनृत्ये 'चक्कर्' अपि प्रसिद्धं, यत्र च नृत्यकारः भ्रमरिका इव परिभ्रमति । एतत् भ्रमणम् एव नृत्यस्य आकर्षकतां वर्धयति ।
- कथकनृत्ये एकस्मिन् एव, नृत्यकारिणी तालसूचकानि पदानि उच्चारयन्ती तालानुगुणं पादाघातं कुर्वती नृत्यति । एतादृशी व्यवस्था अन्येषु साम्प्रदायिकनृत्येषु न दृश्यते ।

# मकरसङ्क्रान्तिः

विशिष्टेषु उत्सवेषु अन्यतमः अस्ति 'मकरसङ्क्रान्ति'-उत्सवः ।. एषः उत्सवः जनवरीमासे आचर्यते समग्रे भारतदेशे । एतस्मात् दिनात् उत्तरायणस्य आरम्भः भवति । तदा सूर्यः उत्तरदिग्भागम् आश्रयति ।

तद्दिने सूर्यः मकरराशिं प्रविशति इति साम्प्रदायिकाः विश्वसन्ति । सूर्यः दक्षिण-गोलार्धस्य परिक्रमणं समाप्य तस्मिन् दिने उत्तरगोलार्धं प्रविशति ।

उत्तरायणे मृताः जनाः जननमरणचक्रतः मुक्तिं प्राप्नुवन्ति, तेषां पुनर्जन्म न भवति इति काचित् प्रथा अस्ति । अतः एव महाभारते कौरव-पाण्डवयोः युद्धे व्रणितः पराक्रमी वयोवृद्धः भीष्मः उत्तरायणस्य प्रतीक्षां कृतवान् । सः इच्छामरणरूपं वरं प्राप्तवान् आसीत् । अतः सः अर्जुननिर्मितायां शरशय्यायां शयानः प्राणत्यागाय उत्तरायणस्य प्रतीक्षां कुर्वन् आसीत् । मम पुनर्जन्म न भवेत् इति इच्छया एव सः सूर्यस्य मकरराशिप्रवेशं निरीक्षमाणः प्राणान् धरति स्म । सूर्यः यदा मकरराशिं प्रविष्टवान् तदा एव सः स्वस्य अन्तिमश्वासोच्छ्वासं कृतवान् ।

## तमिलुनाडुराज्ये

तमिलुपञ्चाङ्गे पोङ्गल्-उत्सवः बहुप्राधान्यं भजते । एषः उत्सवः क्षेत्रेषु जातायाः फलसमृद्ध्याः उत्सवः । चतुर्दिनात्मके अस्मिन् उत्सवे मकरसङ्क्रान्तिदिनस्य उत्सवः प्रामुख्यम् आवहति ।

तेषु चर्तुषु दिनेषु प्रथमदिनस्य उत्सवं 'भोगी' इति कथयन्ति । अस्मिन् दिने ग्रामस्य सर्वे भागाः, गृहाणि, गृहपरिसराः च स्वच्छी-क्रियन्ते । प्रातः एव विशालप्रदेशे अग्निं प्रज्वाल्य तत्र पुरातनानि अनावश्यकवस्तूनि दह्यन्ते ।

परेद्यवि पोङ्गल्-उत्सवः । तस्मिन् दिने



ग्रामे कृषकाः नूतनघटान् क्रीत्वा नूतनवस्त्रं धृत्वा उत्सवे भागं गृह्णन्ति । तस्मिन् दिने नूतनतया वर्धितेन तण्डुलेन तत्कालीनशाकेन च पाकं कुर्वन्ति । ग्रामाद् बहिः कुत्रचित् ग्रामस्थाः सर्वे जनाः एकत्र सम्भूय बृहद्घटेषु ओदनं पचन्ति ।

नगरवासिनः अपि साम्प्रदायिकपाकं कुर्वन्ति । तस्मिन् पाके मधुरं भक्ष्यं भवति । एतत् तण्डुलेन गुडेन च मिश्रितं 'चक्करे पोङ्गल्'नाम्ना निर्दिश्यते ।

उत्सवदिने सर्वेषां गृहाणां पुरतः महाकारिका रङ्गवल्ली शोभते । तथैव मुखद्वारम् आम्रपर्णानां तोरणेन अलङ्कृतं भवति । ततः सर्वे सूर्यं पूजयन्ति ।

अनन्तरदिनस्य उत्सवः 'मट्टपोङ्गल्' इति । तद्दिने गोपूजां कृत्वा गवा कृतं कार्यं प्रति आदरं प्रदर्शयन्ति जनाः । गोपालकाः गाः स्नापयित्वा तेषां शृङ्गाणि कण्ठान् च लघुभिः घण्टाभिः अलङ्कुर्वन्ति । गृहजनैः विशेषतया सज्जीकृतं पोङ्गलखाद्यं तद्दिने गोभ्यः दीयते प्रीत्या ।

केषुचित् स्थलेषु अस्मिन् दिने 'जल्लिकट्टु'-नाम्ना प्रसिद्धं वृषभयुद्धं तु वैशिष्ट्यं भजते । वृषभाणां धावनस्पर्धा अपि अस्मिन् दिने आयोज्यते ।

अन्तिमदिनस्य उत्सवः 'कानुम्पोङ्गल्' इति । तद्दिने कुटुम्बजनाः सर्वेऽपि विहारार्थं गच्छन्ति, बन्धुमित्रादिभिः मिलन्ति वा । केषुचित् प्रदेशेषु 'कान्निपोङ्गल्' इति नाम्ना उत्सवः आचर्यते । साम्प्रदायिकवेषधारिण्यः काश्चन युवतयः आगत्य सर्वेषां गृहाणां पुरतः नृत्यन्ति यष्टिक्रीडां 'कुम्मि'नामकं नृत्यविशेषं वा प्रदर्शयन्ति । प्रतिफलरूपेण गृहजनाः ताः धनेन इक्षुदण्डैः च सम्मानयन्ति ।

## आन्ध्रप्रदेशे

आन्ध्रप्रदेशे एष उत्सवः तमिलुनाडुवत् एव । अत्रापि मकरसङ्क्रान्तितः पूर्वतनं दिनं 'भोगि' इति आचर्यते । 'भोगि'-उत्सवावसरे गृहेषु वर्णलेपनं, स्वच्छीकरणम्, अलङ्करणं च क्रियते । जनाः तद्दिने उषःकाले एव अग्निं परितः उपविश्य गायन्ति ।

मकरसङ्क्रान्ति-उत्सवः अत्र 'पेद्दपण्डुग'-नाम्ना निर्दिश्यते । 'महान् उत्सवः' इति एतस्य पदस्य अर्थः । अस्मिन् दिने कृषकाः कृषिसमये साहाय्यं दत्तवद्भ्यः सर्वेभ्यः कर्मकरेभ्यः



भूरिभोजनं यच्छन्ति ।

तृतीयदिनस्य उत्सवः 'कनुमु' इति निर्दिश्यते । तद्दिने भूरिभोजनं विश्रान्तिः च अनुभूयते सर्वैः । अस्मिन् अवसरे स्पर्धाः, क्रीडाः, अजयुद्धं, वृषभयुद्धं, कुक्कुटयुद्धं इत्यादयः आयोजिताः भवन्ति ।

आन्ध्रप्रदेशस्य केषुचित् भागेषु उत्सवः एषः 'मुक्कनुमु' इति उत्सवेन सह समाप्तं भवति । एतदवसरे गावः पूज्यन्ते, भोज्यन्ते, शोभायात्रार्थं नीयन्ते च ।

# अस्साम्राज्ये

मकरसङ्क्रान्तिकालः अस्सांजनपदीयानाम् कृते उल्लासमयः आनन्दमयः भोजनमयश्च । अत्र एषः उत्सवः 'बिहु' इति, 'भोगाली बिहु' इति वा निर्दिश्यते । 'भोग'पदस्य अर्थस्तु भक्षणं विहरणं च इति ।

'उरुख्' इत्येतत् पौषमासस्य अन्तिमं दिनम् । उत्सवे एतस्य दिनस्य विशेषमहत्त्वम् अस्ति । तस्मिन् दिने पुरुषाः यत्र धान्यलवनं समाप्तं तत्र क्षेत्रे तात्कालिककुटीरं निर्मान्ति । एतत् कुटीरम् उच्यते - 'भेलाघर्' इति । 'मेजी' उत्सवाचरणस्य प्रमुखम् अङ्गम् । चतुर्णां वेणुस्तम्भानां मध्ये काष्ठानां राशिं कृत्वा वेद्याकारः यः निर्मीयते सः उच्यते 'मेजी' इति ।

तस्मिन् दिने महिलाः तण्डुलभक्ष्यम् अन्यानि भक्ष्याणि च निर्मान्ति । आरात्रि ताः 'मेजीं' परितः नृत्यन्त्यः आनन्देन कालयापनं कुर्वन्ति । प्रातः ताः स्नात्वा प्रार्थनां कुर्वन्ति ।



# अन्येषु प्रदेशेषु...

भारतस्य इतरभागेषु अपि एषः मकर-सङ्क्रान्त्युत्सवः उल्लासेन आनन्देन धार्मिकरीत्या च आचर्यते । पञ्जाबप्रदेशे एषः उत्सवः कथ्यते 'लोही' इति । ग्रामीणाः स्वक्षेत्रे वर्धितानां धान्यानां पूजादिकेन एतम् उत्सवम् आचरन्ति । ग्रामेषु स्त्रीपुरुषाः अग्निं प्रज्वाल्य तं परितः तत्रत्यं 'भाङ्गा'नामकं जानपदं नृत्यं कुर्वन्ति । स्त्रियः अस्मिन् अवसरे पादेषु हस्तेषु च 'मेहन्दी'रसेन चित्रं विलिख्य उत्सवम् आनन्देन आचरन्ति ।

पश्चिमबङ्गालप्रदेशे स्थितं गङ्गासागरद्वीपं प्रति मकरसङ्क्रान्तिदिने सर्वतः यात्रिकाः आगच्छन्ति । तत्रैव गङ्गानदी पूर्वसमुद्रेण मिलति । 'गङ्गसागरमेला' इत्येतत् एकं पवित्रं कार्यम् इति जनाः भावयन्ति । नदी-सङ्गमस्थाने स्नानं कृतं चेत् सर्वैः पापैः विमुक्तिः भवति एव इति दृढः विश्वासः अस्ति जनानाम् ।

कर्णाटकेषु अपि एषः उत्सवः वैभवेन एव आचर्यते । जनाः वृषभान् धेनूः च सम्यक् अलङ्कृत्य शोभायात्रां कुर्वन्ति । स्त्रीपुरुषाः नूतनवस्त्रं धृत्वा सर्वेभ्यः जनेभ्यः इक्षुदण्डं, तिलेन सहितं गुडं, शुष्कनारिकेलं च वितरन्ति । अस्मिन् अवसरे प्रसिद्धा साम्प्रदायिकी वाताटस्पर्धा अपि आयोजिता भवति क्वचित् ।

गुजरात्प्रदेशे अपि वर्णमयवाताटानाम् उड्डायनम् अस्मिन् मकरसङ्क्रान्त्यवसरे कुर्वन्ति जनाः । अपि च गुजरातप्रदेशे एतम् उत्सवं पवित्रं मन्यन्ते । अतः अस्मिन् अवसरे विद्यार्थिभ्यः विद्यार्थिवेतनं, पारितोषिक-वितरणम् इत्यादयः कार्यक्रमाः आयोज्यन्ते प्रायः ।

केरलेषु अस्मिन् समये 'शबरिमलै'-यात्राकालः । शबरिमलै भगवतः अय्यप्पस्य वासस्थानम् इति प्रसिद्धम् । मकरसङ्क्रान्ति-दिने 'मकरज्योति'नामकं पवित्रज्योतिः तस्य पर्वतस्य शिखरे आदीप्तं भवति प्रतिवर्षम् अपि ।

एवं मकरसङ्क्रान्त्युत्सवस्य आचरणं देशे विभिन्नप्रदेशेषु विभिन्नतया क्रियते । किन्तु सर्वत्र आचरणे एकसूत्रता अस्ति इति तु सत्यमेव । यथा दीपावली दीपानाम् उत्सवः तथा सङ्क्रान्तिः धान्यस्य उत्सवः । अस्मिन् अवसरे वयं 'सर्वेषां समृद्धिः सुखं च भवतु' इति आशास्महे ।



# तमिलुनाडीया जानपदकथा

'तमिलुनाडु 'शब्दस्य श्रवणस्य अनुक्षणम् अस्माकं मनःपटले काञ्चीपुरीयशाटिकाः, इड्लिदोसाखाद्यानि, कर्णाटकसङ्गीतं, भरतनाट्यं, देवालयाः इत्यादीनां चित्राणि प्रादुर्भवन्ति । क्रिस्तात् पूर्वमेव तमिलुनाडुराज्ये राजप्रशासनम् आसीत् । तमिलु भाषा अपि प्राचीनभारतीयभाषासु अन्यतमा ।

तमिलुनाडुराज्यस्य उत्तरदिशि कर्णाटक-राज्यम् आन्ध्रप्रदेशः च स्तः । पश्चिमायां केरलराज्यम् अस्ति । पूर्वस्यां दक्षिणस्यां च पूर्वसमुद्रः हिन्दूमहासागरश्च स्तः । अस्य राज्यस्य दक्षिणस्याः दिशः कोणे कन्याकुमारी अस्ति । अत्रैव भारतस्य सीमा परिसमाप्ता भवति ।

पूर्वपश्चिमघट्टयोः मेलनम् अस्मिन् राज्ये एव भवति । तत्कारणतः ऊटि, कोडैकेनाल, एर्काड्, कोल्लगिरि इत्यादयः रमणीयाः पर्वतप्रदेशाः एतस्मिन् राज्ये विराजन्ते विशेषतः ।

तमिलुनाडुराज्यस्य विस्तीर्णं १३००५८ चतुरस्रकिलोमीटरात्मकम् अस्ति । जनसंख्या च ६२,११०,८३९ मिता अस्ति । एतत् राज्यं विस्तीर्णेन एकादशं स्थानम् अर्हति देशे ।

## निर्धनस्य पाथेयस्य फलम्

पुलियम्पट्टी इति कश्चन लघुग्रामः । तत्र मुरुगः सेल्वी चेति दम्पती वसतः । मुरुगः दरिद्रः । जीवनार्थं क्षेत्रम्, अन्यत् कार्यं किमपि वा न आसीत् तस्य । तस्य पत्नी जीवन-निर्वहणाय बहु कष्टम् अनुभवति स्म ।

कदाचित् सा अत्र उपजीविकानिर्वहणं कष्टसाध्यम् इति विचिन्त्य पतिम् उक्तवती - ''भवान् कुत्रापि कार्यं कृत्वा धनसम्पादनं न करोति चेत् अहं मम मातृगृहं गमिष्यामि'' इति ।



ततः सा अन्तः गत्वा गतदिनस्य यत् अवशिष्टम् अन्नम् आसीत् तत् जलेन सिक्त्वा तेन सह लवणयुक्तं जलमयं तक्रं संयोज्य, एकां हरितमरीचिकां च तदुपरि संस्थाप्य पाथेयं सज्जीकृत्य तत् आनीय पत्युः हस्ते दत्त्वा अवदत् – ''इदानीं नगरं गच्छतु । कमपि उद्योगम् अन्विष्यतु । उद्योगं विना धनं विना च मह्यं मुखं मा दर्शयतु । भवते अहम् गृहे अवशिष्टं सर्वमपि अन्नं दत्तवती अस्मि'' इति ।

मुरुगः पद्भ्याम् एव अतीवदुःखेन नगरं प्रति प्रस्थितः । उष्णकालः सः । एक-घण्टानन्तरं सः कस्यचित् महतः तिन्त्रिणीवृक्षस्य समीपम् आगतवान् ।



तं वृक्षं दृष्ट्वा सः मुरुगः 'अत्र किञ्चित् विश्रान्तिं स्वीकरोमि । तदनन्तरं मध्याह्ने पत्न्या दत्तं पाथेयं खादामि' इति विचिन्त्य तत् पाथेयम् एकस्यां शाखायां सम्यक् बद्ध्वा वृक्षस्य अधः शयानः शीघ्रमेव निद्रां प्राप्तवान् ।

तस्मिन् तिन्त्रिणीवृक्षे कश्चन ब्रह्मराक्षसः वसति स्म । सः ब्रह्मराक्षसः मुरुगेण महत्या जागरूकतया बद्धं तत् पाथेयम् दृष्ट्वा आश्चर्यचकितः । तस्य स्वभावः आसीत् यत् कुतूहलशमनपर्यन्तं सः तस्मात् विरतः न भवति स्म । अतः सः तां शाखाम् आगत्य तत् पाथेयम् उद्घाटितवान् । तस्य पाथेयस्य गन्धेन सः आकृष्टः अभवत् ।

'अहो, अपूर्वः गन्धः ! कीदृशः आहारः स्यात् एषः ! कदापि मया एतादृशः गन्धः न आघ्रातः' इति चिन्तयन् सः ब्रह्मराक्षसः मुष्टिमितं तक्रान्नं हरितमरीचिकया सह खादितवान् । बहु रुचिकरम् आसीत् तत् । अतः सः पुनः पुनः तत् अन्नं खादितवान् । तेन तत्र अन्नं सर्वथा समाप्तम् एव ।

एतस्मात् सः लज्जितः जातः । 'एषः दरिद्रः उत्थानानन्तरं बुभुक्षितः सन् किं खादेत्' इति चिन्तयन् सः नितरां खिन्नः । अतः सः तक्रान्नयुक्ते तस्मिन् ग्रन्थौ एकं कांस्यपात्रं स्थापितवान् । तत् पात्रं दिव्यया शक्त्या युक्तम् आसीत् । 'एतत् एतस्य शुभं करोतु' इति मुरुगं पश्यन् उक्त्वा सः ब्रह्मराक्षसः ततः अदृश्यः जातः ।

किञ्चित्कालानन्तरं मुरुगः उत्थितः । सः नितरां श्रान्तः बुभुक्षितः च आसीत् । सः आत्मना वृक्षशाखायां बद्धं पाथेयं कुतूहलेन दृष्टवान् । तत्र आहारः न आसीत् । एतत् ज्ञात्वा सः बहु दुःखितः अभवत् । पाथेयपात्रे एकं प्रकाशमानं पात्रं सः दृष्टवान् । किन्तु तत् पात्रं दिव्यशक्तियुक्तम् इति सः न जानाति स्म ।



## उत्सवाः

पोङ्गल्-उत्सवः अत्र धान्यवर्धनसमये क्रियमाणः प्रमुखः उत्सवः । जनवरीमासे क्रियमाणः एषः उत्सवः चत्वारि दिनानि यावत् प्रचलति । वृषभयुद्धं(जाल्लिकट्टु) अस्य उत्सवस्य कश्चन प्रमुखः भागः । एषा क्रीडा ग्रामेषु नगरेषु चापि प्रचलति ।

एप्रिल्मासे मधुरैनगरे चितिरै-उत्सवस्य आचरणं भवति । एष उत्सवः भगवतः सुन्दरेश्वरस्य, पाण्ड्यराजकुमार्याः मीनाक्ष्याः च विवाहदिनत्वेन आचर्यते ।

चिदम्बरक्षेत्रे मामल्लपुरक्षेत्रे च नटराजस्य पुरतः सांस्कृतिकोत्सवः प्रचलति, यस्य च अङ्गतया नृत्योत्सवः अपि प्रचलति । उत्सवसमये राज्यस्य उत्तमाः नर्तकाः द्रष्टुं शक्याः मामल्लपुरे महाबलिपुरे च । त्रयोदशे शतके पल्लवराजैः निर्मितानाम् अत्यपूर्वशिलाशिल्पानां पुरतः निर्मिते अनावृतनृत्यमण्डपे एषः नृत्योत्सवः प्रचलति ।

चिदम्बरे नृत्यकाराणां सर्वेषाम् अधिपतेः नटराजस्य पुरतः एव नृत्योत्सवः प्रचलति । तत्र नर्तकाः स्वीयं नृत्यं देवाय नटराजाय समर्पयन्ति । अस्य देवालयस्य स्तम्भेषु भरतनाट्यस्य १०८ भङ्ग्यः शिल्पिभिः उत्कीर्णाः सन्ति । भरतनाट्यं तमिलुनाडुराज्यस्य शास्त्रीयं नृत्यम् ।

सः तत् पात्रं कोपेन ताडितवान् । तत् पात्रं शब्दम् अकरोत् । तत्क्षणे एव काचन देवता प्रत्यक्षीभूय तस्य पुरतः रुचिकरं भोजनं स्थापितवती । मुरुगः आश्चर्यचकितः । किन्तु सः महत्या बुभुक्षया पीडितः आसीत् इत्यतः 'एतत् कुतः आगतं, कः किमर्थं स्थापितवान्' इत्यादिकम् अचिन्तयन् सर्वं वेगेन खादितवान् एव ।

तस्य भोजनं समाप्तम् । अनन्तरक्षणे एव सर्वं स्वच्छम् अपि अभवत् । पूर्ववदेव तस्य पुरतः तत् पात्रम् आसीत् । मुरुगः तु पूर्णोदरः तृप्तः च । सः तत् पात्रं स्वीकृत्य आनन्देन गृहं प्रति धावितवान् ।

तस्य पत्नी सेल्वी तं दृष्ट्वा असन्तुष्टा । सा जानाति स्म यत् पतिः कमपि उद्योगं न प्राप्तवान् इति । अतः सा कोपेन पतिं बहुधा तर्जितवती । तदा मुरुगः क्रोधेन - ''मुखं मा उद्घाटयतु रे'' इति पत्नीं भर्त्सितवान् । तस्य उग्ररूपं दृष्ट्वा भीता सेल्वी मुखस्य पिधानम् अपि विस्मृतवती । ततः मुरुगः तत् कांस्यपात्रं



कुटीरमध्ये संस्थाप्य तत् सकृत् ताडितवान् । ''आवयोः कृते आहारं ददातु'' इति उक्तवान् च । तदा काचन देवता आगत्य तयोः कृते रुचिकरम् आहारं दत्तवती ।

ततः मुरुगः आत्मना कथं तत् पात्रं प्राप्तम् इति उक्त्वा तत् पात्रं तस्यै दत्तवान् ।

तौ दम्पती चिन्तितवन्तौ - 'देवः अस्मान् अनुगृहीतवान् । अतः वयम् अनेन दरिद्रेभ्यः प्रतिदिनम् आहारं दद्मः' इति ।

सेल्वी उक्तवती - ''सर्वेभ्यः ग्रामीणेभ्यः अपि भोजनं दद्मः'' इति ।

परेद्यवि मुरुगः सेल्वी च प्रतिगृहं गत्वा सर्वान् भोजनार्थम् आहूतवन्तौ । एतौ दरिद्रदम्पती कथम् एतावत् धनं प्राप्तवन्तौ इति कुतूहलेन उत्तमभोजनेच्छया च ग्रामीणाः तयोः गृहम् आगतवन्तः । यदा तत् गृहं प्राप्तं तदा तु तेषाम् इतोऽपि आश्चर्यम् अभवत् । यतः तत्र भोजनपदार्थाः सर्वे सिद्धाः एव आसन् । द्वारस्य पुरतः स्थितौ दम्पती सर्वान् आदरेण 'आगच्छन्तु, आगच्छन्तु' इति वदन्तौ स्वागतीकृतवन्तौ ।

कौशेयवस्त्रं धृत्वा तौ कदलीपत्रस्य पार्श्वे स्थापितं रजतपात्रं जलेन पूरितवन्तौ । आगताः अतिथयः सर्वे भोजनाय उपविष्टाः । सर्वेषां पुरतः उष्णं रुचिकरं भोजनम् आगतम् । भोजने विविधानि भक्ष्यभोज्यानि, व्यञ्जन-पर्पटादीनि, क्वथितसारादीनि, पायस-लड्डुकादीनि च आसन् । सर्वे सन्तोषेण आतृप्ति भोजनं कृतवन्तः ।

एतत् भोजनं ग्रामे सर्वत्र चर्चाविषयः अभवत् । तस्मिन् पुलियम्पट्टिग्रामे कश्चन

## कौशेयवस्त्रनिर्माणम्

तमिळुनाडुराज्ये निर्मीयमाणाः शाटिकाः जगति एव सुविख्याताः । एताः काञ्चीपुरे निर्मीयन्ते । शुद्धकौशेयेन निर्मीयन्ते एताः । नयनमनोहरः वर्णः, वयनोत्कृष्टता, दीर्घ-जीविता इत्यादीनि एतासां वैशिष्ट्यानि । एतासु शाटिकासु सुवर्णतन्तवः (झरी) अपि योज्यन्ते । काञ्चीपुरीयः कौशेयवस्त्र-निर्माणोद्यमः चतुश्शतवर्षेभ्यः पूर्वम् एव आरब्धः ।





धनिकः आसीत् । सः अस्मिन् भोजनकार्यक्रमे न उपस्थितः । किन्तु कुतूहलम् असूया तस्मिन् प्रविष्टे । कदाचित् सः मुरुगस्य गृहं गत्वा तत्रत्यं रहस्यं ज्ञातवान् । ततः सोऽपि तथैव कर्तुं निश्चित्य पत्नीं पाथेयं सिद्धं कर्तुम् उक्तवान् । सा वैविध्यमयं पाकं कृत्वा अनेकेषु पात्रेषु संस्थाप्य दत्तवती । तत् स्वीकृत्य सः धनिकः ब्रह्मराक्षसस्य वासस्थानम् अगच्छत् ।

तत्र सः दीर्घकालं यावत् ब्रह्मराक्षसस्य प्रतीक्षां कृतवान् । किन्तु राक्षसः तेन न दृष्टः । दीर्घकालिकप्रतीक्षया तस्य तत्र नीरसता जाता । अतः सः - "भोः मूर्ख ब्रह्मराक्षस ! कुत्र गतः भवान् ? किमर्थम् एतावान् विलम्बः ?" इति उच्चस्वरेण अपृच्छत् ।

ब्रह्मराक्षसेन एतत् श्रुतम् । 'एतं नीतिं

## देवालयाः

तमिळुनाडुराज्यीयाः देवालयाः सुप्रसिद्धाः । तञ्जावूरुनगरस्थः बृहदीश्वर-देवालयः स्वस्य शिल्पवैशिष्ट्येन विराजते । एषः देवालयः प्रथमेन राजराजचोलेन (क्रि. श. ९८५-१०१३) निर्मापितम् । एतस्य गोपुरे स्थिता शिल्पयुक्ता काचित् कृष्णशिला तथा योजिता अस्ति यत् तस्याः छाया कदापि भूमौ न पतति ।



मधुरैनगरस्थः मीनाक्षीसुन्देश्वरदेवालयः अपरः सुप्रसिद्धः देवालयः । अत्र भगवान् शिवः मीनाक्षी च आराध्यदेवौ ।

काञ्चीपुरस्य एकाम्बरेश्वरदेवालये भगवान् शिवः पूज्यते, यश्च पञ्चभूतेषु अन्यतमं पृथिवीतत्त्वम् अत्र पूजितवान् ।

श्रीरङ्गे स्थितः श्रीरङ्गनाथदेवालयः, कुम्भकोण-रामेश्वर-चिदम्बरादिषु तत्परिसरे च स्थिताः देवालयाः चापि दर्शनयोग्याः सन्ति ।

बोधयिष्यामि' इति अचिन्तयत् सः । अतः यदा धनिकः निद्रावशं गतः तदा ब्रह्मराक्षसः तेन आनीतानि आहारपात्राणि अपनीय तस्मिन् स्थाने एकं वेत्रकण्डोलं स्थापयित्वा – 'एषः कण्डोलः यथायोग्यं करिष्यति' इति स्वगतम् उक्त्वा ततः अदृश्यतां गतः ।

धनिकः जागरितः सन् परितः दृष्टिं प्रसारितवान् । यदा कण्डोलः दृष्टः तदा सः आश्चर्यचकितः सन्तुष्टः च । 'मुरुगः यादृशम् आहारं नीतवान् आसीत् ततोऽपि उत्कृष्टम् आहारम् अहम् आनीतवान् आसम् । अतः एषः कण्डोलः मम महोपकारम् एव कुर्यात्' इति चिन्तयन् सः गृहं प्रतिगतः ।

अनन्तरदिने सः मित्रबान्धवान् भोजनार्थं निमन्त्रितवान् । यदा सर्वे उपस्थिताः तदा सः आत्मविश्वासेन कण्डोलं प्रार्थितवान् – ''अतिथिभ्यः दातुम् उत्कृष्टम् आहारं ददातु'' इति ।

अनन्तरक्षणे एव चत्वारः बलशालिनः श्मश्रुधारिणः पुरुषाः कण्डोलतः उत्थिताः । ते धनिकं तस्य मित्रबान्धवान् च गृहीत्वा शिरः मुण्डयित्वा निराहारम् एव तान् गृहं प्रति प्रेषितवन्तः ।

'अहो ! अहं मुण्डितशिरस्कः अभवम् । मम मानः अपि अपगतः' इति विलपितवान् धनिकः ।

एषः 'भोजोत्सवः' ग्रामीणानां वार्ताविषयः जातः । एतस्मात् उत्थितायाः लज्जातः आत्मानं रक्षितुं धनिकेन दीर्घप्रवासः करणीयः अभवत् ।



## प्रवासकेन्द्राणि

तमिळुनाडुराज्ये सर्वत्र मन्दिराणि एव सन्ति । तानि अतिरिच्यापि बहूनि दर्शनयोग्यस्थलानि सन्ति अत्र । तेषु अन्यतमम् अस्ति 'मरीनाबीच्' । एतत् तमिळुनाडु-राजधान्यां चेन्नैनगरे अस्ति । जगति एव दैर्घ्येण द्वितीयम् एतत् । एतस्मिन् समुद्रतीरे प्रयाणिकानां चित्तम् आक्रष्टुं समर्थानि अन्यानि अपि विश्रान्तिस्थानानि सन्ति बहूनि ।

तमिळुनाडु-कर्णाटकसीमायां स्थितः 'होगेनक्कल्'जलपातः एतद्राज्यीयम् अपरम् आकर्षणम् । कावेरीनदी द्विधा विभक्ता भवति अत्र । तस्याः एकः प्रवाहः नदीरूपेण अनुवर्तते । अपरश्च जलपातम् उत्पादयति ।

कावेरीनदी पर्वतादिषु अपि प्रवहन्ती औषधीयसस्यानां मूलेषु स्थितं सारम् आत्मना सह वहति इत्यतः एतस्यां नद्यां स्नानम् आरोग्य-वर्धकत्वेन परिगण्यते ।

# भारतम् अवगम्यताम्

## प्रश्नोत्तरम्

अपरः गणराज्योत्सवः उपस्थितः अस्ति । ५१ तमः गणराज्योत्सवः अस्माभिः आचर्यते वर्षस्यास्य (२००२) जनवरीमासस्य २६ तमे दिनाङ्के । भारतं स्वतन्त्रं गणराज्यं जातं यत् तत् निमित्तीकृत्य एषः उत्सवः आचर्यते । विदेशीयान् विरुद्ध्य कृतस्य स्वातन्त्र्यसङ्ग्रामस्य फलरूपेण प्राप्तम् एतत् । एतस्य मासस्य प्रश्नाः भारतस्य स्वातन्त्र्यसङ्ग्रामम् अवलम्ब्य भवन्ति । गतवर्षस्य जनवरी-एप्रिल्-मासयोः मध्यकाले प्रकाशितं 'विंशतितमे शतके भारतम्' इत्येतं विभागं ये परिशीलितवन्तः ते तु विनायासम् उत्तरं लेखितुम् अर्हन्ति ।

१. 'दि इण्डियन् स्ट्रगल्'नामकस्य पुस्तकस्य रचयिता कः ?
२. 'सत्याग्रह'नामकं पदं केन ऐदम्प्राथम्येन प्रयुक्तम् ?
३. जवहरलालनेहरू महात्मगान्धिवर्येण कदा कुत्र ऐदम्प्राथम्येन मिलितवान् ?
४. त्रयः राष्ट्रियनायकाः निर्दिश्यन्ते - लाल्, बाल्, पाल् इति शब्दैः । तेषां पूर्णं नाम किम् ?
५. बङ्गालराज्यस्य विभागः कदा अभवत् ?
६. कदा 'ईस्ट् इण्डिया कम्पनी'नामिकया संस्थया अधिकारः आंङ्लसर्वकाराधीनीकृतः ?
७. भारतस्वातन्त्र्यविधेयकं कदा अङ्गीकृतं भारतीयराष्ट्रियकाङ्ग्रेस्संस्थया ?
८. 'सैमन्कमीशन्' भारतं प्रति कदा आगच्छत् ? तस्य उद्देशश्च कः आसीत् ?
९. कदा आन्तरिकसर्वकारः आरचितः ?
१०. 'स्वातन्त्र्यं मम जन्मसिद्धः अधिकारः । तम् अहं प्राप्स्यामि एव' इति वचनं कः कदा उदीरितवान् ?

*(उत्तराणि अग्रिमे मासे)*

### *'डिसेम्बर्'मासस्य प्रश्नानाम् उत्तराणि*

१. २००० तमवर्षस्य मेमासस्य ११ दिनाङ्के । शतकोटितमशिशोः नाम अस्ति - 'आस्था' इति ।
२. काञ्चन्जुङ्गा इति । तस्य औन्नत्यं - ८,५९८ मीटर्/२०,२०८ फुट्
३. सिन्धुः, झेलम्, चनाब्, रावी, सतलेज् च ।
४. उत्तराञ्चलं, छत्तीसगढः, झारखण्डः च । तेषां राजधानी च क्रमेण - डेहराडून्, रायपुरं, राञ्ची च ।
५. तमिळ्नाडु इति । तयोः नाम श्रीमती जानकी रामचन्द्रन्, श्रीमती जे. जयललिता चेति ।

# २४. कालिदासीया मोहकरम्यता



"तात ! अस्माकं वार्षिकोत्सवस्य निमित्तं वयं कालिदासस्य किञ्चन नाटकम् अभिनयन्तः स्मः । श्वः सोमवासरे अस्माभिः सर्वैः सभामण्डपे मेलनीयम् । तत्र अस्माकम् अध्यापकः प्रायः पात्रवितरणं करिष्यति" इति देवनाथवर्यं सोत्साहम् उक्तवान्, विद्यालयात् प्रत्यागतः सन्दीपः ।

"भवद्भिः अभिनीयमानम् 'अभिज्ञान-शाकुन्तल'नाटकं स्यात् खलु ?" इति पृष्टवान् देवनाथवर्यः ।

"सत्यम् । किन्तु भवता कथं तत् ऊहितम् ?" इति पृष्टवान् सन्दीपः ।

"तत् तु तस्य नाटकस्य श्रेष्ठताकारणतः । कालिदासेन विक्रमोर्वशीयं मालविकाग्निमित्रं चेति अपरं नाटकद्वयं यद्यपि लिखितं, किन्तु तत् उभयम् अपि यदा रङ्गे अभिनीयते तदा उभयस्यापि मूलसौन्दर्यम् अपगच्छति प्रायः । भवन्तः शाकुन्तलनाटकं संस्कृतमयम् एव अभिनयन्ति, उत ..... ?"

"न । वयं संस्कृतेन अभिनयन्तः न स्मः ।"

"किमर्थं तथा ? संस्कृतभाषया तस्य नाटकस्य प्रदर्शने का आपत्तिः भवताम् ?"

"संस्कृतं कठिनम् ।"

अनुवर्तमाना कथामाला



''एषः असमीचीनः अभिप्रायः वत्स ! संस्कृतशिक्षणार्थं यः क्रमः आश्रितः आसीत् तस्य कारणतः एतादृशः भावः उत्पन्नः स्यात् लोके । किन्तु, अद्य संस्कृतपाठनार्थं सन्ति अनेकाः आकर्षिकाः आधुनिकपद्धतयः । अतः संस्कृतस्य मूलसौन्दर्यस्य आस्वादने न कोऽपि क्लेशः । आस्तां तावत् । तस्मिन् नाटके किं पात्रं स्यात् भवतः ?''

''अहं न जानामि । श्वः तत् निश्चितं भविष्यति । किं भवान् तस्य नाटकस्य कथां सङ्क्षेपेण श्रावयितुं शक्नुयात्, येन अहं पात्रचयने समर्थः स्याम् ?''

''पात्रं चेतव्यं किम् अस्ति तत्र ? विदूषकस्य ग्राम्यजनस्य वा पात्रं किमपि स्यादेव नाटके । तदेव पात्रं दीयेत भवते'' इति उक्तवती चमेली शालातः प्रत्यागच्छन्ती एव ।

''अये, महाप्राज्ञा भवती शाकुन्तल-नाटकस्य कथां जानाति एव खलु ? अतः पितामहेन श्रावयिष्यमाणा कथा भवत्या श्रोतव्या नास्ति । अतः गच्छतु इतः । अहम् एकः एव तां श्रोष्यामि'' इति भगिनीम् उपहासपूर्वकम् उक्तवान् सन्दीपः ।

''इदानीं भवन्तौ उभौ अपि इतः गत्वा शालासमवस्त्रं परिवर्त्य पाणिपादं प्रक्षाल्य अल्पाहारं सेवित्वा आगच्छताम् । केचन अतिथयः आगत्य निरन्तरसम्भाषणादिना पितामहे नीरसतां जनितवन्तः अद्य । अतः इदानी सः किञ्चित् विश्रान्तिसुखम् अनुभवतु नाम'' इति उक्तवती तत्र आगता जयश्रीः ।

''एतत् अनुमोद्यते मया'' इति उक्तवान् देवनाथवर्यः ।

उभौ अपि बालौ ततः धावित्वा शाला-स्यूतम् एकत्र स्थापितवन्तौ, अर्धघण्टाभ्यन्तरे प्रत्यागतौ च ।

देवनाथवर्यः नेत्रे निमील्य उपविश्य कथानिरूपणक्रमं चिन्तयन् आसीत् ।

''आर्य ! कथाकथनं भवतः पीडायै न भवति खलु ?'' इति पृष्टवती जयश्रीः ।

''न कदाचिदपि । कथाकथनम् एव वस्तुतः सुखदायकम्'' इति हसन् उक्तवान् देवनाथवर्यः ।

ततः तेन कथा आरब्धा –

''पूर्वं राजा दुश्यन्तः हस्तिनापुरं पालयति स्म । सः कदाचित् मृगयार्थम् अरण्यं गतवान् । तत्र कश्चित् हरिणम् अनुसरन् सः कण्वाश्रमसमीपम् आगतवान् । तदवसरे



विश्वामित्रमेनकयोः पुत्री, कण्वेन पालिता शकुन्तला केनचित् भ्रमरेण पीड्यमाना आसीत् उद्याने । तदा तस्याः सखी सविनोदं वदति – 'दुश्यन्ते शासति कथम् अबलां पीडयितुम् एतेन धैर्यं प्राप्तम्' इति ।

काकतालीयतया तत्र उपस्थितः दुष्यन्तः एव शकुन्तलां दुष्टभ्रमरतः रक्षितुम् उत्सुकः आसीत् ।

कण्वः आश्रमे न आसीत् । अतः शकुन्तला एव अतिथिसत्कारभारं निरूढ-वती । मृगयातः श्रान्तः राजा विश्रान्त्यर्थम् आश्रमे निवसति । तस्मात् प्रदेशात् हिंस्रपशूनां दानवसमूहस्य च निवारणे सः उद्युक्तः भवति । अल्पे एव काले शकुन्तलादुश्यन्तौ परस्परानुरक्तौ भवतः । गान्धर्वविधिना तयोः विवाहः प्रचलति अपि ।

मुद्राङ्गुलीयकं शकुन्तलायै दत्त्वा राजा प्रतिगच्छति । कण्वः आश्रमे न आसीत् इत्यतः ताम् आत्मना सह न नयति सः ।

एकस्मिन् दिने शकुन्तला दुश्यन्तम् एव ध्यायन्ती उपविष्टा आसीत् । तदा शीघ्रकोपी दुर्वासाः तत्र उपस्थितः भवति । शकुन्तला एतत् न परिलक्षते । स्वस्य सत्कारे जातम् अनादरं दृष्ट्वा कुपितः दुर्वासाः – 'यं भवती ध्यायन्ती अस्ति सः भवतीं विस्मृतवान् भवतु' इति शापं ददाति ।

शकुन्तला शापवचनम् अपि न शृणोति । किन्तु तस्याः सखी शृणोति । तस्याः प्रार्थनानुसारं मुनिः – 'यदा सः अभिज्ञापकं किमपि द्रक्ष्यति तदा शापविमोचनं भविष्यति' इति उक्त्वा ततः निर्गच्छति ।

आश्रमं प्रत्यागतः कण्वः शकुन्तलायाः परिणयविचारं जानाति । 'योग्यः एव वरः चितः तया' इति सः सन्तुष्टः भवति ।

अत्रान्तरे शकुन्तला गर्भवती भवति । कण्वः तां पतिगृहं प्रति प्रेषयति ।

राजास्थाने राजा शापकारणतः शकुन्तलां पत्नीत्वेन न अभिजानाति । तेन दत्तं मुद्राङ्गुलीयकं नौकायाम् उपविश्य विहार-समये लीलया यः हस्तसञ्चारः कृतः तत्कारणतः जले पतितम् आसीत् । एतत् न जानाति स्म शकुन्तला । अतः अभिज्ञापक-रूपेण राज्ञे किमपि दर्शयितुम् अशक्ता जाता सा । अतः राजा तां तिरस्करोति ।

राज्ञा तिरस्कृतां शकुन्तलां माता मेनका पोषयति । शकुन्तला अरण्ये पुत्रं प्रसूतवती ।

कदाचित् कश्चन धीवरः कस्यचित् मीनस्य उदरे एकम् अङ्गुलीयकं प्राप्नोति । तत् राज्ञे अर्पयति सः । तत् दृष्ट्वा राजा शकुन्तला-परिणयादिवृत्तान्तं स्मरति । किन्तु शकुन्तला न प्राप्यते । शकुन्तलाविषये यत् अनुचितम् आचरितं तत् स्मरन् खेदेन एव दिनानि यापयति राजा ।

कदाचित् सः कश्यपाश्रमं गच्छति । तत्र कश्चन बालः सिंहशिशुभिः सह क्रीडन् आसीत् । सः बालः एव दुष्यन्तस्य पुत्रः । ततः दुष्यन्तशकुन्तलयोः मेलनं भवति । तौ सुखेन कालं यापयतः ।

तयोः पुत्रः भरतः गच्छता कालेन राजा भविष्यति । सः श्रेष्ठः राजा । तस्य कारणतः एव अस्माकं देशस्य नाम 'भारतम्' इति जातम् ।''

एवं कथाम् उक्त्वा देवनाथवर्यः पुनः अवदत् - ''शाकुन्तलविषये श्रेष्ठः जर्मन्कविः किम् उक्तवान् इति किं भवन्तः जानन्ति ? सः वदति -

*यौवनकुसुमस्य रसं रसयितुं*
*प्रौढवयसः फलस्य रुचिम् आस्वादयितुम्*
*रम्यतां मान्त्रिकाकर्षणं च वीक्षितुम्*
*मर्त्यस्वर्गयोः वर्णनम् एकपदेनैव कृतं द्रष्टुं*
*पठ्यतां शाकुन्तलं, यदेतान् सर्वान् तर्पयति*
*युगपदेव*'' इति ।





# देवीभागवतम्

रम्भकरम्भौ दानवपुत्रौ । तयोः अपत्यं न आसीत् । अतः तौ दीर्घकालं तपसि मग्नौ जातौ । करम्भः पञ्चनदीतीर्थे निमज्ज्य तपः कृतवान् । रम्भः एकस्य वृक्षस्य उपरि उपविश्य तपः कृतवान् । इन्द्रः मकररूपं प्राप्य नदीं प्रविश्य करम्भस्य संहारं कृतवान् । भ्रातुः संहारवार्तां श्रुत्वा रम्भः नितरां क्रुद्धः । सः स्वस्य शिरः कर्तयित्वा अग्नये समर्पयितुम् उद्युक्तः जातः ।

यदा सः शिरः कर्तयितुं खड्गम् उन्नीतवान् तदा अग्निः प्रत्यक्षः भूत्वा - ''किमर्थम् आत्महत्यार्थं प्रयत्नः क्रियते ? एतस्मात् कः लाभः ? भवतः तपसा अहं प्रसन्नोऽस्मि । कः वरः दातव्यः मया ?'' इति अपृच्छत् ।

''देव ! यदि मयि भवान् प्रसन्नः अस्ति तर्हि अजेयं पुत्रं ददातु । देवाः दानवाः वा यं जेतुं न शक्नुयुः तादृशं पुत्रं ददातु'' इति प्रार्थितवान् रम्भः ।

''भवतः इच्छा पूर्णा भविष्यति'' इति उक्त्वा अग्निः अदृश्यः जातः ।

रम्भः यदा प्रत्यागच्छन् आसीत् तदा मध्येमार्गम् एकस्मिन् सुन्दरे प्रदेशे एका महिषी तेन दृष्टा । स च प्रदेशः यक्षाणाम् अधीनः आसीत् । सा महिषी तम् अनुसृत्य पातालम् अपि आगतवती ।

पाताले कश्चन महिषः तां महिषीम् अनुसृतवान् । एतस्मात् रम्भः कुपितः । सः तं महिषं सम्यक् ताडितवान् । एतेन कुपितः महिषः शृङ्गाभ्यां रम्भम् उन्नीय भूमौ अपातयत् । रम्भः मृतः जातः । रम्भस्य मरणं दृष्ट्वा महिषी परमदुःखेन अग्निप्रवेशं कृतवती । तदा तस्मात् अग्निकुण्डात् उभौ



राक्षसौ उत्पन्नौ - महिषासुरः रक्तबीजः चेति ।

राक्षसाः महिषासुरं स्वस्य राजानं कृतवन्तः । महिषासुरः काञ्चनपर्वते घोरां तपस्यां कृतवान् । तेन सन्तुष्टः ब्रह्मा तस्य पुरतः प्रत्यक्षः जातः । महिषासुरः ब्रह्माणम् अयाचत - ''मम मृत्युः एव यथा न भवेत् तथा वरं ददातु'' इति ।

तदा ब्रह्मा उक्तवान् - ''जन्म यथा निश्चितं तथैव मरणम् अपि निश्चितम् एव सर्वेषाम् । एवं स्थिते अमरत्वरूपं वरम् अहं कथं वा दद्याम् ? अन्यं कमपि वरं याचतु । भवतः इच्छाम् अवश्यं पूरयिष्यामि'' इति ।

एतत् श्रुत्वा महिषासुरः अवदत् - ''काऽपि स्त्री मादृशं वीरं मारयितुं नार्हति । अतः देवदानवमानवेषु कोऽपि मां मारयितुं यथा न शक्नुयात् तथा वरं ददातु '' इति ।

''अस्तु तावत् । किन्तु स्मरतु - कापि स्त्री एव भवतः संहारं करिष्यति'' इति उक्त्वा ब्रह्मा अदृश्यतां गतः ।

एतं वरं प्राप्य महिषासुरः मदोन्मत्तः जातः । कोऽपि पुरुषः मां मारयितुं न अर्हति इति सः जानाति स्म । अतः सः स्वर्गम् एव वशीकर्तुं सन्नद्धः अभवत् । सः कश्चित् दूतम् आहूय असूचयत् - ''देवलोकं गत्वा इन्द्रं युद्धवार्ताम् उक्त्वा आगच्छतु'' इति । सः दूतः स्वर्गं गत्वा महिषासुरस्य वचनं श्रावितवान् ।

एतत् श्रुत्वा क्रुद्धः इन्द्रः दिक्पालकान् आहूय उक्तवान् - ''रम्भपुत्राय महिषासुराय ब्रह्मणा वरः दत्तः । एतस्मात् मत्तः सः देवलोकं वशीकर्तुं सन्नाहं कृतवान् अस्ति । उद्धत-वचनानि तस्य मुखात् निर्गच्छन्ति इदानीम् । इन्द्रपदवीम् एव वशीकरिष्यामि इति वदन् कश्चित् दूतं प्रेषितवान् अस्ति सः । 'मम सेवकत्वम् इष्यते भवता उत युद्धम् इति सूचयतु' इति दूतद्वारा वार्तां प्रेषितवान् अस्ति सः । एतादृशे अवसरे किं करणीयम् इति भवन्तः एव निर्णयन्तु । एतादृशान् दुष्टान् न निगृह्णीमः चेत् लोके अराजकता उत्पद्येत । अतः युद्धं करणीयम् एव भवेत् । युद्धारम्भात् पूर्वम् अस्माभिः शत्रोः सामर्थ्यम् अवगन्तव्यम् । एतदर्थं कस्यचित् जनस्य प्रेषणं वरम्'' इति ।

इन्द्रेण प्रेषितः दूतः महिषासुरस्य बलस्य पूर्णं विवरणम् आनीतवान् । एतत् ज्ञात्वा इन्द्रः नितराम् आश्चर्यचकितः । सः स्वस्य पुरोहितं बृहस्पत्याचार्यम् आहूय उक्तवान् - ''महिषासुरः महत्या सेनया सह युद्धं कर्तुम् आगच्छन् अस्ति । एतत् आक्रमणम् अवरोद्धुं किं कोऽपि उपायः अस्ति ?'' इति ।

इन्द्रस्य भीतिं दृष्ट्वा बृहस्पतिः अवदत् - ''कापि विपत्तिः उपस्थिता चेत् धैर्यच्युतिः न भवेत् । धैर्यं ध्रियताम् । यत् भवितव्यं तत् भवेत् एव । तथापि प्रयत्नः कदापि न परित्यक्तव्यः । दैवशक्तौ विश्वासमात्रेण किमपि कार्यं न सिद्ध्यति'' इति ।

तदा इन्द्रः अवदत् - ''प्रयत्नः न परित्यक्तव्यः इत्येतत् अहम् अङ्गीकरोमि । राजानः सर्वदा शत्रुसंहारम् इच्छन्ति एव । किन्तु तदर्थम् उपायः कः इत्येव मम स्पष्टता नास्ति । अतः इदानीं किं करणीयम् इति भवान् एव मार्गम् उपदिशतु'' इति ।

''युद्धस्य करणम् अकरणं वा भवतः अधीनम् । अतः युद्धं करोतु इति, न करोतु इति वा अहं न वदामि । यत् युक्तं भासते तदनुगुणं करोतु'' इति अवदत् बृहस्पतिः ।

ततः इन्द्रः ब्रह्माणं शरणं गत्वा अवदत् - ''महिषासुरः नाम मदोन्मत्तः राक्षसः महत्या सेनया सह स्वर्गस्य आक्रमणार्थम् आगच्छन् अस्ति । तस्य सेना अपारा । इदानीं किं करणीयम् इति न ज्ञायते'' इति ।

तदा ब्रह्मा अवदत् - ''शिवेन विष्णुना च सह समालोच्य तयोः साहाय्यं स्वीकृत्य एव युद्धकरणं वरं स्यात् । अतः आदौ कैलासं गच्छाम'' इति ।

ततः तौ कैलासं गत्वा शिवं समग्रं वृत्तान्तं श्रावितवन्तौ । तदनन्तरं त्रयः अपि सम्भूय विष्णुसमीपं गतवन्तः । सम्यक् समालोच्य ते निर्णीतवन्तः यत् महिषासुरस्य सम्मुखीकरणम् एव उत्तमः मार्गः इति । ब्रह्मा, शिवः, विष्णुः च युद्धार्थं सन्नद्धाः जाताः । तैः सह



कुमारस्वामी, इन्द्रः चापि आगतौ । देवसेना अपि राक्षससेनां सम्मुखीकर्तुं सन्नद्धा जाता ।

ततः देवदानवयोः घोरं युद्धं प्रवृत्तम् । दिक्पालकाः, इन्द्रः, त्रिमूर्तयः च स्वस्य शौर्यपराक्रमादिकं प्रदर्शितवन्तः । तथापि महिषासुरस्य पुरतः ते हतप्रभाः जाताः । अन्ते तैः प्राणरक्षणार्थं रणरङ्गात् पलायनं करणीयम् अभवत् । तेषां पराजयतः स्वर्गः महिषासुराधीनः जातः । महिषासुरः इन्द्रासने उपविश्य अन्येषु आसनेषु राक्षसान् उपवेशितवान् । देवकोषं स्वाधीनीकृत्य निरातङ्कं सुखम् अनुभवन् शासनम् अनुवर्तितवान् ।

एतत् कष्टं सोढुं देवाः न शक्तवन्तः । ब्रह्मणः आस्थानम् आगत्य ते उक्तवन्तः - ''महिषासुरः स्वर्गम् एव विजित्य अस्मान् कष्टगर्ते पातितवान् अस्ति । अस्माकम्



एतस्याः दुरवस्थायाः विषये किमर्थम् अवधानं न दीयते भवता ? अग्रे अस्माकं का गतिः स्यात् इति भवता एव वक्तव्यम्'' इति ।

''मया अपि किं वा कर्तुं शक्येत ? कोऽपि पुरुषः तं मारयितुं न शक्नोति । तादृशं वरं प्राप्तवान् अस्ति सः । कापि स्त्री एव तं संहर्तुम् अर्हति । अतः एतद्विषये वयं विष्णुना शिवेन च सह चर्चां करवाम, आगच्छन्तु'' इति उक्तवान् ब्रह्मा ।

ततः ते सर्वे शिवसमीपं गतवन्तः । ''केन उद्देशेन आगतं भवद्भिः ?'' इति पृष्टवान् शिवः ।

''भवता अविदितं किं वा अस्ति ? महिषासुरेण स्वर्गः स्वाधीनीकृतः अस्ति । इन्द्रादयः अन्ये देवाः च तेन निरन्तरं पीड्यन्ते । अतः एतद्विषये भवतः साहाय्यम् इच्छामः वयम्'' इति अवदत् ब्रह्मा ।

तदा शिवः मन्दहासपूर्वकम् अवदत् - ''देवानाम् एतस्याः दुरवस्थायाः मूलकारणं भवान् एव खलु ? भवतः वरस्य कारणतः एव कोऽपि पुरुषः तं संहर्तुं न शक्नोति । इदानीं भवान् एव वदतु - तस्य संहारार्थं कां प्रेषयेम इति । किं भवान् स्वपत्नीं प्रेषयेत् ? अथवा किं मया मम पत्नी प्रेषणीया ? उताहो इन्द्रस्य पत्नी किम् एतत् कार्यं साधयेत् ? एतासु काऽपि युद्धविद्यायां निपुणा न । अतः रणरङ्गं प्रति तासां प्रेषणतः न किमपि प्रयोजनं भवेत् । विष्णुः एव कमपि मार्गं सूचयितुं समर्थः'' इति ।

ततः सर्वे विष्णोः समीपं गतवन्तः । तेषाम् आगमनकारणं पृष्ट्वा विष्णुः उक्तवान् - ''वयं सर्वे राक्षसेन पराजिताः स्मः । तं जेतुं काचित् स्त्री एव समर्था खलु ? अतः वयं सर्वे स्वस्य तेजसः आधारेण काञ्चित् स्त्रियं सृजाम ।

वयं सर्वे तस्यै स्वस्य अस्त्राणि यच्छाम । सा महिषासुरस्य संहारं करोतु'' इति ।

विष्णोः कथनस्य समनन्तरम् एव तेषां मध्ये किञ्चन तेजः उत्पन्नम् । अष्टादश-हस्तयुक्ता काचित् स्त्री प्रत्यक्षा जाता । देवाः स्वस्य आयुधानि तस्याः हस्ते स्थापितवन्तः । तदा सा देवी देवान् उद्दिश्य - ''देवाः ! अलं भीत्या । तं राक्षसम् अहं मारयिष्यामि'' इति वदन्ती सिंहनादं कृतवती ।

महिषासुरः एतं नादं श्रुत्वा - ''कः सः सिंहः इव गर्जति ? तं गृहीत्वा मम पुरतः उपस्थापयन्तु । मत्तः पराजयं प्राप्तवतां देवानां मध्ये कस्यचित् अपि एतावत् धैर्यं भवितुं न अर्हति'' इति अवदत् ।

महिषासुरस्य आज्ञायाः अनुसारं केचन सैनिकाः देवीं ग्रहीतुम् आगताः । महादेव्याः अवतारं दृष्ट्वा ते भयेन कम्पमानाः जाताः । ते धावन्तः प्रतिगत्य महिषासुरम् उक्तवन्तः - ''काचित् स्त्री सिंहम् आरुह्य तिष्ठति । अष्टादश हस्ताः सन्ति तस्याः'' इति ।

तदा महिषासुरः मन्त्रिणम् अवदत् - ''तर्हि तां गृहीत्वा आनयतु । अहं तां राजमहिषीं करिष्यामि'' इति ।

मन्त्री महादेव्याः समीपं गत्वा भीत्या अपृच्छत् - ''अम्ब ! भवती का ? किमर्थं अत्र आगतं भवत्या ? समस्तलोकस्य शासकः महिषासुरः भवतीं परिणेतुम् इच्छति'' इति ।

एतत् श्रुत्वा देवी मन्दहासं प्रकटयन्ती उक्तवती - ''अहं भवतः राजानम् एव संहर्तुम् आगता अस्मि । तस्य पक्षं समर्थयतः भवत अपि संहारः स्यादेव । मम आगमनस्य उद्देशं स्वामिनः पुरतः स्पष्टीकरोतु'' इति ।

मन्त्री महादेव्याः वचनं महिषासुरं यथावत् निवेदितवान् । एतस्मिन् वचने महिषासुरस्य विश्वासः न जातः । सः युद्धार्थं सेनापतिं प्रेषितवान् । सः महादेव्या हतः जातः । महिषासुरः अन्यान् सेनापतीन् प्रेषितवान् । ते अपि हताः अभवन् । अन्ते महिषासुरः स्वयं गतवान् । तयोः घोरं युद्धं प्रवृत्तम् । देवी कामरूपिणी आसीत् । अतः अनेकानि रूपाणि धरन्ती सा युद्धं कृतवती । अन्ते सा चक्रायुधेन तस्य शिरः कर्तितवती । एतत् दृष्ट्वा सन्तुष्टाः देवाः देव्याः स्तोत्रं कृतवन्तः ।





# नित्यसन्तोषी

भीमः रामः च प्रतिवेशिनौ । रामः सर्वदा सन्तोषेण तिष्ठति स्म । किन्तु भीमः सर्वदा दुःखी एव भवति स्म ।

रामस्य चतुरेकरमिता समृद्धा भूमिः आसीत् । अतः भीमः चिन्तितवान् यत् रामस्य सन्तोषस्य कारणं भूसम्पत्तिः एव इति । तदर्थं सः पञ्च-एकरमितां भूमिं क्रीतवान् । तथापि रामस्य यावान् सन्तोषः तावान् न भवति स्म तस्य । 'रामस्य एतादृशस्य सन्तोषस्य मूल-कारणं किं स्यात् ? मया किमर्थं तादृशः सन्तोषः न प्राप्यते' इति चिन्तयति स्म सः ।

रामस्य विवाहः जातः । तस्य पत्नी नितरां सुन्दरी । चन्द्रलेखा इव शोभते स्म सा । अतः भीमः चिन्तितवान् यत् सुन्दरी पत्नी अपि रामस्य सन्तोषस्य कारणं स्यात् इति । अतः सः अपि विवाहे मतिं कृतवान् । रामस्य पत्न्याः यावत् सौन्दर्यं ततोऽपि अधिकं सौन्दर्यं स्यात् मम पत्न्याः इति अचिन्तयत् भीमः । अतः सः सर्वत्र अन्विष्य रामपत्नीतोऽपि सुन्दरीं कन्यां परिणीतवान् । तथापि तेन रामस्य आनन्दात् अधिकः आनन्दः न प्राप्तः ।

रामः अट्टद्वयात्मकं भवनं निर्मापितवान् । तदा भीमः त्र्यट्टात्मकं भवनं निर्मापितवान् । रामः दशभ्यः जनेभ्यः भोजनं ददाति स्म । अतः भीमः विंशतिजनेभ्यः भोजनदानम् आरब्धवान् । एवं सर्वेषु अंशेषु रामम् अतिशेतुं प्रयत्नं करोति स्म भीमः । तथापि सन्तोषः यदा तोल्यते तदा रामस्य सन्तोषस्य एव भारः अधिकतया दृश्यते स्म ।

भीमः सर्वदा रामस्य सर्वान् व्यवहारान् सूक्ष्मेक्षिकया पश्यति स्म । रामः यत् करोति स्म तदेव कार्यं भीमः द्विगुणितप्रमाणेन करोति स्म । तथापि भीमस्य सन्तोषस्य परिमाणे वृद्धिः न जाता ।

एतादृश्यां स्थितौ कश्चन संन्यासी तं ग्रामम् आगतवान् । रामः तं स्वगृहं प्रति निमन्त्र्य भक्त्या श्रद्धया च तदीयं सत्कारं कृतवान् ।

तस्य आदरसत्कारादिना सन्तुष्टः संन्यासी



तम् उक्तवान् - ''वत्स ! भवान् यत् इच्छति तत् याचतु'' इति ।

तदा रामः विनयेन उक्तवान् - ''मम पत्नी सद्गुणसम्पन्ना । मम पुत्राः अपि उत्तमस्वभाव-युक्ताः । एतावता अहं सन्तुष्टः अस्मि । यथाशक्ति परोपकारम् अपि अहं कुर्वन् भवामि । इदानीं यत् सौभाग्यम् अस्ति तेनैव वयं सर्वे तृप्ताः । एषा एव स्थितिः सदा भवतु इति आशीर्वादं करोतु कृपया'' इति ।

''भवतः सन्तृप्तिः श्लाघनीया । अतः भगवतः कृपादृष्टिः भवन्तं सदा रक्षिष्यति'' इति वदन् आशीर्वादं कृतवान् सः संन्यासी ।

एतदनन्तरं भीमस्य निमन्त्रणं प्राप्य सः भीमगृहं गतवान् । महता आदरेण भीमोऽपि संन्यासिनः सत्कारं कृतवान् । अयं सत्कारः रामस्य सत्कारं निश्चयेन अतिशेते स्म । अतः सन्तुष्टः संन्यासी भीमम् अपि उक्तवान् - ''भवान् यत् इच्छति तत् याचतु'' इति ।

''मम प्रतिवेशी रामः मां कस्मिंश्चित् अपि अंशे अतिशेतुं यथा न शक्नुयात् तथा वरेण अनुगृह्णातु'' इति प्रार्थितवान् भीमः ।

एतत् श्रुत्वा आश्चर्यं प्रकटयन् संन्यासी उक्तवान् - ''स्वस्य निमित्तं यत् आवश्यकं तत् एव याचनीयम् । अन्यस्य भाग्यस्य विषये असूया न उचिता । अन्यस्य अभिवृद्धेः स्थगनार्थं प्रयासः सर्वथा अनुचितः'' इति ।

तदा भीमः उक्तवान् - ''रामम् अतिशेतुं शक्तः भवामि चेदेव मम आनन्दः । मम आनन्दः यथा वर्धेत तथा आशीर्वादः करणीयः भवता । अन्यथा मया मम दौर्भाग्यं

निन्दनीयम्'' इति ।

संन्यासी क्षणकालं नेत्रे निमील्य स्थितवान् । ततः सः नेत्रे उद्घाट्य भीमम् उक्तवान् - ''भवतः इच्छाम् अहं पूरयिष्यामि । किन्तु एतदर्थं रामस्य अनुज्ञा आवश्यकी भवति'' इति ।

तदा भीमः खेदेन उक्तवान् - ''भवान् वरं दातुं न इच्छति चेत् वरं मा ददातु । रामः अनुज्ञां दद्यात् इति भ्रमः मास्तु भवतः'' इति ।

''अये मूर्ख ! रामः यदि अनुज्ञां दद्यात् तर्हि भवतः एव सन्तोषस्य वृद्धिः भविष्यति । सः यदि अनुज्ञां न दद्यात् तर्हि अपि सः भवत्तः अधमः एव भविष्यति । रामः आवयोः वार्तालापं न जानाति । अत्र उभयथा अपि भवतः एव लाभः । अतः रामम् अत्र आनाययतु'' इति सूचितवान् संन्यासी ।

रामम् आनायितवान् भीमः । भीमस्य गृहम् आगतः रामः भीमस्य अपेक्षां ज्ञात्वा विना प्रतिवचनम् अनुज्ञां दत्तवान् एव ।

तदा संन्यासी आश्चर्यं प्रकटयन् - ''अन्यः अतिशयितव्यः इति सर्वेषाम् अपि इच्छा भवति एव । भीमः भवन्तं यथा अतिशयीत तथा अनुज्ञा दत्ता अस्ति भवता । किम् एतत् ज्ञात्वा कृतं भवता ? एवम् अनुज्ञां यच्छतः भवतः आशयः कः ?'' इति ।

तदा रामः उक्तवान् - ''महात्मन् ! भवान् तु पूज्यः । भवतः पुरतः गोपनेन किम् ? प्रतिवेशिनः यदि अस्मत्तः न्यूनाः भवन्ति तर्हि ईर्ष्यासूयादिकं प्राप्य अस्मान् आधिक्येन पीडयन्ति । अस्माकं मनः खेदयन्ति अपि । यदि ते अस्मत्तः श्रेष्ठाः स्युः तर्हि ते अस्मान् विस्मरेयुः । अथवा अस्मान् दयापात्रं भावयित्वा ते अस्माकं साहाय्यं कुर्युः । यदि वयं स्वसन्तोषमात्रं पश्यामः तर्हि अहं स्वार्थी अस्मि इति भावः अस्मान् पीडयेत् । अन्येषां प्रगतिं ये इच्छन्ति ते सदा सन्तोषं प्राप्तुम् अर्हन्ति । अतः अन्यः मत्तः अधिकं सन्तोषं प्राप्नोति चेत् मम आनन्दः एव । परसन्तोषात् ये सन्तुष्यन्ति ते एव नित्यसन्तोषिणः'' इति ।

एतत् श्रुत्वा भीमः अवगतवान् यत् रामस्य सन्तोषस्य रहस्यं किम् इति । अतः तस्मात् दिनात् सः परसन्तोषणम् एव स्वसन्तोषं भावयितुम् उद्युक्तः अभवत् । तस्मात् सोऽपि अचिरात् एव नित्यसन्तोषी जातः ।



# उत्तमस्वप्नद्रष्टा

विनायकः पाकनिपुणः । तस्य मातापितरौ, बान्धवाः, परिवारः वा न आसन् । अतः यत्र पाककार्यं लभ्यते तत्र गच्छति स्म सः । एवम् एव कानिचन वर्षाणि गतानि । 'इतः परं एकत्र स्थातुं प्रयासः करणीयः' इति सः चिन्तितवान् । अतः उद्योगदातुः धनिकस्य अन्वेषणम् आरब्धवान् सः ।

रघुवीरः कश्चन कृपणः । सः अविवाहितः । 'यदि विवाहितः स्यां तर्हि पत्नीपुत्रादीनां पोषणार्थं व्ययः करणीयः भवेत्, सम्पत्तिः च पुत्राणाम् अधीना भवेत्' इति चिन्तनं तस्य ।

यदा वार्धक्यं प्राप्तं तदा सः चिन्तितवान् - 'कश्चन पाचकः गृहे पाककार्यार्थं नियोक्तव्यः' इति । परिवाररहितम् एव पाचकम् इच्छति स्म सः । परिवाररहितः विनायकः यदा आगत्य उद्योगं पृष्टवान् तदा रघुवीरः सन्तुष्टः । एवं रघुवीरगृहे विनायकः पाचकत्वेन नियुक्तः जातः । प्रतिदिनं रघुवीरः सामान्यम् एव आहारं सेवते स्म । 'उत्तमः पाकः कार्येत चेत् तदेव पाचकः अपि खादेत्' इति आतङ्कः तस्य । पाचकस्य उत्तमाहारसेवनं न सहते स्म सः ।

* * *

दीपावलीदिने ग्रामे सर्वेषु गृहेषु उत्साहेन उत्सवः आचर्यते स्म । ग्रामजनाः गृहम् अलङ्कृत्य नूतनवस्त्राणि धृत्वा मधुरपाकं सज्जीकुर्वन्ति स्म । विनायकः अपि दीपावलीदिने बहुविधखाद्यानि सज्जीकृतवान् उत्साहेन । एतदर्थं सः स्वामिनः अनुमतिं न प्राप्तवान् आसीत् । 'दीपावली तु विशेषोत्सवः । अतः



विशेषपाकः स्वामिना अनुमन्यते एव' इति तस्य चिन्तनम् आसीत् ।

रघुवीरः भोजनार्थम् आगतः । विविधखाद्यानि दृष्ट्वा सः आश्चर्यचकितः । ''किम् एतत् विनायक ? सप्ताहार्थं यावत् आवश्यकं तावत् अद्यैव किं सज्जीकृतं भवता ?'' इति अपृच्छत् सः ।

''अद्य दीपावली । वर्षे एकस्मिन् दिने वा भूरिभोजनं भवान् सेवेत इति मया एषः पाकः सज्जीकृतः'' इति उक्तवान् विनायकः ।

''एवम् ! अस्तु तावत्'' इति उक्त्वा मौनम् आश्रितवान् रघुवीरः । 'यदि कृतं कार्यम्

अनुचितं इति वदेयं तर्हि अयं कुपितः सन् इतः निर्गच्छेत्' इति भीतिः तस्य ।

'पाकार्थं धनं तु व्ययितम् एव । अतः अद्य आतृप्ति विविधखाद्यानि खादिष्यामि' इति निर्णीतवान् सः ।

'एतादृशः उत्तमः पाकः पाचकेन विनायकेन न खादनीयम्' इति चिन्तनं रघुवीरस्य । अतः सज्जीकृतानि सर्वाणि खाद्यानि एकैकशः स्वयम् एव खादितुम् उद्युक्तः अभवत् सः । पाकस्य भूयान् भागः यदा खादितः तदा तदीयम् उदरं धान्यागाराकारतां गतम् । तथापि खादितवान् सः यावच्छक्ति । महान् प्रयत्नः कृतः चेदपि कुण्डलिकाः तेन खादितुं न शक्ताः एव । किन्तु ताः विनायकाय दातुं न इच्छति स्म सः । 'विनायकः एतानि यथा न खादेत् तथा कोऽपि उपायः करणीयः' इति सः अचिन्तयत् ।



''कुण्डलिकाः रुचिकर्यः सन्ति । ताः सायं खादिष्यामि अहम् । एताः सर्वाः पार्श्वे स्थापयतु'' इति विनायकम् अवदत् रघुवीरः । स्वामिना यथा आदिष्टं तथैव कृतवान् विनायकः ।

रात्रिः जाता । किन्तु रघुवीरः अल्पाम् अपि बुभुक्षां न प्राप्तवान् एव । तथापि 'ताः कुण्डलिकाः मया एव खादनीयाः' इति तस्य सङ्कल्पः । अतः सः विनायकम् आहूय अवदत् - ''भोः विनायक ! आवयोः मध्ये काचित् स्पर्धा कुतो न भवेत् ? तेन उत्सवाचरणम् आनन्दमयं स्यात् । आवाम् उभौ अपि शयनं करवाव । उत्तमं स्वप्नं द्रष्टुं प्रयत्नं च करवाव । यस्य स्वप्नः अत्युत्तमः भवति सः एताः कुण्डलिकाः खादतु । एतत् अनुमन्यते खलु भवता ?'' इति ।

विरोधवचनं वक्तुम् अशक्नुवन् विनायकः अवदत् - ''अस्तु । तथैव भवतु'' इति ।

रघुवीरः सन्तोषेण शयनार्थं गतवान् । 'श्वः प्रातः मम बुभुक्षा स्यादेव । तदा एताः कुण्डलिकाः सर्वाः अहम् एव खादिष्यामि । मम स्वप्नः एव अत्युत्तमः इति निर्णयम् अहम् एव श्रावयिष्यामि । मम निर्णयं विरोद्धुं पाचकस्य तस्य सामर्थ्यं कथं भविष्यति ?' इति अचिन्तयत् सः ।

रघुवीरः यदा गाढनिद्रामग्नः जातः तदा विनायकस्य उदरे महती बुभुक्षा उद्बुद्धा । सः विना शब्दम् उत्थाय पाकशालां गत्वा कुण्डलिकापात्रस्य आवरणम् अपनीतवान् । कुण्डलिकाः तस्य खादनेच्छाम् उद्दीपितवत्यः । अन्यच्च प्रातःकालतः तेन किमपि खादितं न आसीत् अपि । अतः सर्वाः कुण्डलिकाः खादित्वा उद्गिरणं कृतवान् सः । ततः पुनरपि विना शब्दं गत्वा सः शय्यायां सुप्तवान् ।

अनन्तरदिने प्रातः उत्थितः रघुवीरः विनायकम् आहूतवान् । ''ह्यः रात्रौ कीदृशः स्वप्नः दृष्टः भवता ?'' इति पृष्टवान् च ।

''मया तु ह्यः रात्रौ रोमाञ्चकारी स्वप्नः दृष्टः'' इति विनयेन उक्तवान् विनायकः ।

''मया कीदृशः स्वप्नः दृष्टः इति ज्ञातुं कुतूहली स्यात् खलु भवान् ? मया तु अपूर्वः स्वप्नः दृष्टः । स्वप्ने मया काचित् राजकुमारी परिणीता । अहं तस्याः राज्यस्य राजा अभवम् । मम पट्टाभिषेकस्य अनन्तरं राजकुमारी अहं

चसिंहासने उपविष्टवन्तौ । आस्थानिकाः मन्त्रिप्रभृतयः च आवां परितः स्थिताः आसन् । सुन्दर्यः नर्तक्यः समग्रं दिनं यावत् नृत्यं प्रदर्शितवत्यः । निपुणाः वाद्यवादकाः विविधानि वाद्यानि वादयन्ति स्म । एवम् एकं दिनं कथं गतम् इत्येव न ज्ञातं मया । तदस्तु, भवतः स्वप्नः कीदृशः आसीत् ?'' इति पृष्टवान् रघुवीरः ।

तदा विनायकः अवदत् - ''यदा अहं निद्रां प्राप्तवान् तदा मम स्वप्ने माता दुर्गा गर्जन्ती प्रत्यक्षा अभवत् । 'दीपावलीदिने प्रातःकालतः सायङ्कालपर्यन्तम् उपवासम् आचरतः भवतः कियत् धैर्यम् ? गच्छतु पाकशालाम् । तत्रत्याः कुण्डलिकाः खादतु । अन्यथा मारयिष्यामि भवन्तम्' इति क्रोधेन आदिष्टवाती सा । अहं भीतः । तथापि तां विनयेन अवदम् - 'अम्ब ! ताः अहं खादितुं न शक्नोमि । यः उत्तमस्वप्नं पश्यति सः एव ताः खादितुम् अर्हति इति मया मम स्वामिना च अङ्गीकृतम् । कृपया अनुरोधं मा करोतु । स्वामिने दत्तं वचनं भञ्जयितुम् अहं न इच्छामि' इति । 'मास्तु प्रतिवचनम् । साक्षात् पाकशालां गत्वा कुण्डलिकाः खादतु । अन्यथा अहं संहरिष्यामि भवन्तम्' इति आदिष्टवती सा । दीपावलीदिने अहं मरणं प्राप्तुं न इच्छामि स्म । अतः कुण्डलिकाः खादिताः मया'' इति ।

''कीदृशः मूर्खः भवान् ! किमर्थम् अहं न जागरितः भवता ? पार्श्वप्रकोष्ठे एव अहम् आसम् । उच्चैः आहूतं चेदपि अहम् आगच्छेयम् । तदा भीत्या भवता कुण्डलिकाः खादिताः न अभविष्यन् । किमर्थम् एतत् न कृतं भवता ?'' इति क्रोधेन पृष्टवान् रघुवीरः ।



''मया भवतः आह्वानार्थं प्रयत्नः कृतः एव । किन्तु भवान् राजास्थाने राजकुमार्या सह सिंहासने उपविष्टः आसीत् । भवन्तं परितः आस्थानिकाः बहवः आसन् । नाट्यकाराः वाद्यकाराः चापि आसन् । एवं स्थिते कथम् अहं भवत्समीपम् आगन्तुं शक्नुयाम् ? तथापि मया कश्चन प्रयत्नः कृतः । किन्तु द्वारपालकाः मां बलात् निवारितवन्तः । अतः मया भवत्समीपम् आगन्तुं सर्वथा न शक्तम्'' इति असहायकताप्रदर्शनपुरस्सरम् उक्तवान् विनायकः ।

रघुवीरः निर्वचनः जातः । स्वस्य कृत्यर्थं सः लज्जितः जातः । तस्य कृत्यस्य असमीचीनताम् उपायेन स्मारितवान् आसीत् विनायकः । विनायकसदृशम् उत्तमं पाचकं त्यक्तुं सर्वथा न इच्छति स्म रघुवीरः ।

ततः आरभ्य रघुवीरः उत्तमं भोजनं सज्जीकारयन् तत् खादितुं विनायकाय अपि अवकाशं ददाति स्म ।


चन्दमामाप्रस्तुतिः
10
अजेयः गरुडः
चित्र - पाणिः
पितुः आज्ञायाः अनुगुणम् आदित्यः गरुडमूर्तेः पूजां करोति स्म । कदाचित्
जासमये कश्चन पिञ्छः बृहदाकारतां प्राप्य आकाशे उड्डीय गतः । आदित्यस्य शरीरे
कानिचन परिवर्तनानि दृष्टानि । अशरीरवाणी असूचयत् यत् भवता भगवतः
आशीर्वादः प्राप्तः अस्ति, जनाः च अपरिवर्तितरूपेण एव भवन्तं
द्रक्ष्यन्ति इति । बहवः गरुडवेषधारिणः राज्ये दृष्टाः । जनस्थाने
प्रवर्तमानं शूलारोपणं द्रष्टुं जनाः सम्मिलिताः । सेनापतिः
त्पुत्रः च एतत् शूलारोपणं निवारयितुं
त्नं कृतवन्तौ । तदनन्तरम् ...


किं भवता आदित्यस्य बन्धनं कृतम् ?
प्रधानमन्त्री तदीये निवासस्थाने नास्ति ।
यदि मम योजना सफला भवेत् तर्हि चन्द्रपुर्याः भाग्यं परिवर्तितं स्यात् ।


यत् शिरच्छेदनं निश्चितम् आसीत् तत् व्याक्षिप्तम् अस्माभिः ।
शीघ्रं प्रासादस्य सुरक्षाभटान् परिवर्तयन्तु राजा च ग्रहीतव्यः ।
... ततः राजा रहस्यस्थले स्थापनीयः । तदनन्तरं राज्ये घोषणीयं यत् राजा गरुडेन अपहृतः अस्ति इति ।
अस्तु सेनापतिवर्य !


यदि गरुडः अस्माभिः गृहीतः भवेत् तर्हि....
रवीन्द्र ! अचिरात् एव तेन सह युद्धम् आरब्धं भविष्यति ।


कश्चन अधिकारी नरेन्द्रदेवम् उक्तवान् यत् राज्ञः प्रकोष्ठे एकं पत्रम् आसीत् इति ।
किम् एतत् पत्रम् ? केन एतत् स्थापितं स्यात् ।
अहं राज्ञः शत्रुः न, अपि तु मित्रम् । राजा मुख्यमन्त्री च मया स्वाधीनीकृतौ ।....


... एतेन क्रमेण तौ रक्ष्येते मया । इतः परं युद्धं भविष्यति सच्छक्ति-दुष्टशक्त्योः ।
भोः शत्रवः, सावधानाः भवन्तु । - गरुडः
गरुडः ! गरुडः !! भवन्तः इतः गत्वा राज्ञः मन्त्रिणः च अन्वेषणं कुर्वन्तु । तौ मारयन्तु अपि । एषा मम आज्ञा इति अन्यान् अपि वदन्तु ।


यदि गरुडस्य उपस्थितिः सूच्यते तर्हि पारितोषिकम् ! मयापि सावधानेन भाव्यम् ।
जनस्थाने घोषितं यत् राजा प्रधानमन्त्री च अदृश्यतां गतौ इत्यतः रवीन्द्रदेवः कार्यनिर्वहणाधिकारित्वेन नियुक्तः अस्ति इति ।

राज्ञः परिवारः पर्वतमार्गेण गच्छन् आसीत् ।

महाराज ! ते सर्वे सेनापतिपक्षीयाः आसन् ।

ते गरुडः इव मुखावरणं धृत्वा अटन्तः सन्ति ।

... जनान् पीडयन्ति ते ।

.सर्वान् मारयन्ति ते ।

... गृहाणि ज्वालयन्ति ते ।

...सर्वविधान् अत्याचारान् अपि कुर्वन्तः सन्ति ते ।

मया ज्ञातं यत् नरेन्द्रदेवः राजभक्तान् सुरक्षाभटान् अपनीय तत्र स्वपक्षीयान् नियोज्य भवन्तम् अपहर्तुं योजनां कृतवान् आसीत् इति ।

यदा अपायसम्भावना मया ज्ञाता तदा भवान् अत्र आनीतः । रथस्य चालकः अस्ति रामसिंहः । मया भवान् कुत्र नीतः इति राजभवने कोऽपि न जानाति ।

एषा गुहा अपायरहितं स्थलम् ।

आदित्य ! भवान् मया सह स्थास्यति खलु ?

मया राजधानीं गत्वा तत्रत्या स्थितिः परिशीलनीया । रामसिंहः भवतः रक्षणदायित्वं निर्वक्ष्यति । भोः रामसिंह !

रामसिंहः तत्र उपस्थितः

अरुणः अत्रैव अस्ति आ बहोः कालात् ।

वयं महाराजेन मिलाम तावत् ।

महाराज ! एषः रामसिंहः । अरुणा मम पितुः सकाशात् आयुर्वेदं पठति स्म । एषा भवता सह स्थास्यति ।

वेषं परिवर्त्य आदित्यः राजधानीं गच्छति ।

अस्माकं मुख्यमन्त्री अत्युत्तमः आसीत् । दौर्भाग्यवशात् सः अदृश्यतां गतः ।

अहो, एते योग्येन क्रमेण दण्डनीयाः ।

अनुवर्तते



लिख्यतां शीर्षिका

# चित्रशीर्षिकास्पर्धा






**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यन्ते ।

पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## पुरस्कृतशीर्षिका





**प्राप्तेऽपि क्रीडनके किमर्थम् उदासीनता ?**
**निलीयते खलु, किम् आगता माता ?**

## अभिनन्दनानि

**'नवम्बर्'मासीयस्पर्धाशीर्षिकाप्रेषकः -**
**सनत्कुमार उपाध्यायः**
**शङ्कराचार्यसंस्कृतविद्यालयः**
**द्वारका. जि.जामनगर - ३६१ ३३५**

**चन्दमामायाः वार्षिकं ग्राहकशुल्कं -**

**भारते रू. १२० - ००**

Payment in favour of CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

For subscription details, please see facing page.



